# अथ माध्यनन्दिनीयसंन्यासपद्धतिः

महाराष्ट्रप्रान्तन्तार्गत देवस्थली ग्राम निवासी
श्रीलक्ष्मणशर्म सम्पादिता

भाषा टीका सहिता च ।

प्रकाशक : –
वाणी विलास प्रकाशन
के० ८/५, बाँबीहटिया, वाराणसी

सम्वत् २०४५

मूल्यम् २०/-

छन्दः पादयुगां निरुक्ति शुभगां शिक्षांच जंघायुगा
ऋग्वेदो भुजां यजुस्तु जघनां या सामस्त्वथर्वोदराम् ।
तर्कन्याय कुचां श्रुतिस्मृति करां काव्यादिते दारला
वेदान्ताऽमृत लोचनां भगवतीं श्री राजराजेश्वरीम्

लालनाम्
छन्दःपाद युगां निरुक्ति शुभगां शिक्षाञ्च जंघां युगाम्,
ऋग्वेदो भुजा यजुस्तु जघना या सामस्त्वथर्वोदराम्
तर्क न्याय कुचां श्रुति स्मृति करां काव्यादि ते
लालनाम्, वेदान्ताऽमृत लोचनां भगवतीं
श्री राजराजेश्वरीम् ॥

# समर्पणम्

श्रीमत्कुलपूज्यायाः सिद्धश्रीयन्त्रसहितायाः महालक्ष्म्याः कुलदेव्याः प्रसादात् पूर्णसिद्धिंगतानामहोरात्रमहालक्ष्मीचरणसेवमानानां मन्त्रशास्त्रपारङ्गतानां मन्त्रशास्त्रसम्बन्धिग्रन्थलेखकानां श्रीमत्परमहंसपरिव्राजकाचार्य १००८ प्रकाण्डपण्डित मंत्रशास्त्रविशारद श्रीविद्योपासक श्रीकृष्णानन्दसरस्वतीयतिवर्यसेवितचरणानां तथा मन्त्रशास्त्रपारंगत दामोदरगुरुसेवितचरणानां मत्कुलपूज्यानां देवस्थलीकुलभूषणानां मत्पितामहपितामहानां श्रीविद्योपासकानां श्री १००८ शिवकौलेन्द्रस्वामिनां सिद्धचरणकमलेषु देवस्थलीत्युपाह्व लक्ष्मणशर्मणा मया मत्कृतिरियं माध्यन्दिनीयसंन्यासपद्धतिनाम्नी पुस्तिका पुष्पाञ्जलिरूपेण समर्पितास्ति ।

# भूमिका

अधुना यत्र तत्र पृथक् पृथक् विषयस्य अनेकाः ग्रन्थाः प्रकाशिताः सन्ति । किन्तु तेषां मध्ये वेदशास्त्रसम्मताः प्राचीनपद्धत्यनुसारिणो लोकोपकारकाः ग्रन्था अल्पाः सन्ति । तथापि मया प्रकाशकप्रेरणया महता परिश्रमेण माध्यन्दिनीयसंन्यासपद्धतिं सम्पादीकृत्य गुरुजन-साहाय्यात् भाषाटीकां विर·-। भवतां विदुषामग्रे उपस्थापिता । आवश्यकीयविषयसहिता भाषाटीकासहिता सङ्क्षिप्ता मत्कृतिरियं माध्यन्दिनीयसंन्यासपद्धतिः कर्मकाण्डिजनानां संन्यासाश्रमेच्छूनां च महदुपक. का भविष्यतीत्याशासे—

**संन्यासपद्धतावस्यां कापि स्याद्यदि च त्रुटिः ।**
**विद्वज्जनाः क्षमिष्यन्तीत्याशासे पुत्रदोषवत् ॥**

विद्वज्जनसेवकः—

**देवस्थलीत्युपाह्व लक्ष्मण शर्मा ।**

श्रीगणेशाय नमः ॥ श्रीगुरुचरणारविन्दाभ्यां नमः ॥

# अथ माध्यन्दिनीयसंन्यासपद्धतिः

## प्रारभ्यते

नारायणपदाम्भोजे नत्वा गुरुपदाम्बुजे ।
माध्यन्दिनीयसंन्यासपद्धतिस्तन्यते स्फुटा ॥ १ ॥

तत्रादौ सर्वप्रायश्चित्तं कुर्यात् ॥ संन्यासप्रार्थना । आदौ गृहे

श्रीगणेशाय नमः ॥ श्रीमहालक्ष्म्यै नमः । श्रीशिवकौलेन्द्राय नमः ॥

## अथ माध्यन्दिनीयसंन्यासपद्धत्याः भाषाटीका प्रारभ्यते

महालक्ष्मीपदाम्भोजे नत्वा भाषां करोम्यहम् ।
माध्यन्दिनीयसंन्यासपद्धतेर्निर्मलां स्फुटाम् ॥ १ ॥

सबसे पहले सर्वप्रायश्चित्त करके संन्यास प्रार्थना करे । पहिले घर में माता,

पिता, स्त्री, पुत्र इत्यादिकों से "मैं संन्यास करता हूँ" इस प्रकार आज्ञा लेकर अपना घर ग्राम आदि की परिक्रमा करके उसके बाद एक कोस उत्तर दिशा की तरफ जाकर वहाँ पर स्नान, देवपूजा इत्यादि नित्य कर्म करके देवता व

मातृपितृभार्यापुत्रादीनां अहं संन्यासं करोमीत्याज्ञां गृहीत्वा आत्मगृहग्रामादिप्रदक्षिणं कृत्वा ततः क्रोशप्रमाणमुत्तरं दिशं गत्वा तत्र स्नानदेवार्चनादि कर्म कृत्वा देवपित्रादिस्मरणं कुर्यात्। ततः निःस्पृहं शान्तं सुशीलं सुवशं ब्रम्हकुलोत्पन्नं सर्वविक्रियारहितं लोभमोहादिषड्ढूर्मिरहितं[1] शीतातपादिषड्ढूर्मिरहितं[2] वा कामक्रोधादि-

पितरों का स्मरण करे। उसके बाद इच्छारहित, शान्त, अच्छे स्वभाव वाले, इन्द्रियों को अपने वश में रखने वाले, ब्राह्मण के कुल में पैदा भये हुए, संपूर्ण

१—लोभ, मोह, जरा, मृत्यु, क्षुधा, पिपासा इनको षड्ढूर्मि कहते हैं।
२—शीत, आतप, लोभ, मोह, क्षुधा, पिपासा इनको भी षड्ढूर्मि कहते हैं।

विकारों से रहित, लोभमोहादिषडूर्मि से रहित अथवा शीतातपादिषडूर्मि से रहित, कामक्रोधादि छ रिपुओं से रहित, आत्मसाक्षात्कार जिनको भया है ऐसे, ब्रह्मज्ञान में तत्पर और अच्छी तरह से शुद्ध चैतन्य वाले ऐसे गुरु को खोज करके दण्डवत् प्रणाम करके उस गुरु के पास एक वर्ष, छ महीना अथवा

षड्रिपुरहितं आत्मदर्शिनं ब्रह्मज्ञानपरायणं सम्यकशुद्धचैतन्यमेवं गुरुं संशोध्य दण्डवत्प्रणामं कृत्वा तन्निकटे वर्षं षण्मासं त्रिमासं वा वसन्यतिधर्मान्वीक्ष्य सर्वैषणां त्यक्त्वा रुद्रगायत्रीजपाद्यन्यतरेणान्तःकरणशुद्धिं विधाय संन्यासं प्रार्थयेत् ॥ ततः प्रायश्चितोक्तकाले तीर्थादौ संकल्पं कुर्यात् । अथ संकल्पः ॐ विष्णु-

तीन महीना रहकर यतिधर्मों को देख कर, सब तरह की इच्छा का त्यागकर, रुद्रजप अथवा गायत्रीजप इनमें से किसी एक का जप करके अन्तःकरण की शुद्धि को करके संन्यास के लिये प्रार्थना करे। प्रायश्चित्त के लिये कहे हुए समय

१—काम, क्रोध, लोभ, मोह, मद, मात्सर्य इनको षड्रिपु कहते हैं ।

में तीर्थादि में जाकर संकल्प करे। संकल्प इस प्रकार है–"विष्णुर्विष्णुर्विष्णुः विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य ब्रह्मणो द्वितीये परार्धे विष्णुपदे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे युगे कलियुगे कलिप्रथमचरणे भरतवर्षे भरतखंडे जम्बूद्वीपे आर्यावर्तैकदेशे अविमुक्त वाराणसीक्षेत्रे आनन्दवने महाश्मशाने गौरीमुखे त्रिकंटकविराजिते विक्रमशके बौद्धावतारे भागीरथ्याः पश्चिमे तीरे अमुकनामसंवत्सरे अमुकायने अमुकर्तौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकदिवसनक्षत्रे अमुकस्थिते वर्तमाने चंद्रे अमुकस्थिते श्रीसूर्ये अमुकस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु शुभनामयोगे शुभकरणे एवंगुणविशेषणविशिष्टायां शुभपुण्यतिथौ

से लेकर माचरिष्ये" तक पढ़कर संकल्प करके फिर तिल, कुशा और तुलसी से युक्त चार गौका निष्क्रय द्रव्य हाथ में लेकर "मत्संल्पित० से मुत्सृजे" तक

अमुकगोत्रस्य अमुकशर्मणः मम करिष्यमाणसंन्यासयोग्यताप्राप्त्यर्थं चतुःकृच्छ्रात्मकं प्रायश्चित्तं प्रतिकृच्छ्रं तत्तत्प्रत्याम्नायैकैकगोनिष्क्रयद्वाराहमाचरिष्ये । इति संकल्पः । तिलकुशतुलसीयुतं गोचतुष्टयनिष्क्रयद्रव्यं हस्ते गृहीत्वा मत्संकल्पितकृच्छ्रचतुष्टयात्मकप्रायश्चित्तस्य सिद्ध्यर्थमिदं गोचतुष्टयनिष्क्रयभूतं द्रव्यं ब्राह्मणेभ्यो दातुमहमुत्सजे । इत्युत्सृज्य ब्राम्हणेभ्यो दत्वा एकादश्यां द्वादश्यां वा ब्रम्हरात्रिर्यथाभवेत्तथा दैवाद्यष्टश्राद्धान्यारभेत् ।

पढ़कर छोड़ दे । वह उत्सर्ग किया हुवा गोनिष्क्रयद्रव्य ब्राह्मणों को देकर एकादशी अथवा द्वादशी के दिन दैवादि अष्ट श्राद्धों को आरंभ करे । इन

श्राद्धों को नान्दीश्राद्धविकारत्व होने से "वृद्धावादौ क्षये चान्ते" इस वाक्य से श्राद्ध के दिन रसोई के पहिले और वैश्वदेव करने के अनंतर श्राद्ध करना चाहिये। ये श्राद्ध दैविक होने से दिन के पहिले हिस्से में अर्थात् सवेरे ही

एतेषां श्राद्धानां नान्दीश्राद्धविकारत्वात्–"वृद्धावादौ क्षये चांते" इति वाक्येन श्राद्धदिने पाकान्तरेण पूर्वं वैश्वदेवानंतरं श्राद्धानि कर्तव्यानि। एतानि श्राद्धानि दैवत्वात्पूर्वाह्णे एव। श्राद्धदिने नैमित्तिकं निर्वर्त्य वैश्वदेवं कृत्वा अनंतरं नद्यादौ गत्वा प्राङ्मुखो यज्ञोपवीती यवसहितजलेन श्राद्धदेवतां तर्पयेत्। देशकालौ संकीर्त्य करिष्यमाणसंन्यासाङ्गभूताद्यष्टश्राद्धदेवतानां

करने चाहिये। श्राद्ध के दिन नैमित्तिक कर्म निपटा कर तथा वैश्वदेव करके नदी पर जाकर पूर्वमुख यज्ञोपवीती होकर यवसहित जल से श्राद्ध देवता का तर्पण करे। पहिले कहा हुवा पूरा संकल्प पढ़कर उसमें 'करिष्यमाण० से करिष्ये'

तक जोड़ कर संकल्प करे। इस प्रकार संकल्प करके पवित्रसहित कुश सहित और यवमिश्रित जलसहित अंजलि से तर्पण करे। आगच्छंतु०

तर्पणं करिष्ये। इति संकल्प्य। सपवित्रेण सकुशेन यवमिश्रोदकेनाञ्जलिना तर्पयेत्। आगच्छन्तु महाभागा विश्वेदेवा महाबलाः। तर्पणे विहिता ये च सावधाना भवन्तु ते॥ कुशमूले स्थितो ब्रह्मा कुशमध्ये जनार्दनः। कुशाग्रे शङ्करं विद्यात्रयो देवा व्यवस्थिताः॥ ॐ ब्रम्हा तृप्यताम्। ॐ विष्णुस्तृप्यताम्। ॐ महेश्वरस्तृप्यताम्। ॐ देवर्षयस्तृप्यन्ताम्। ॐ ब्रह्मर्षयस्तृप्यन्ताम्। ॐ क्षत्रर्षयस्तृप्यन्ताम्। ॐ वसवस्तृप्यन्ताम्। ॐ रुद्रास्तृप्यन्ताम्। ॐ आदित्यास्तृप्यन्ताम्। ॐ सनकस्तृप्यताम्। ॐ सनन्दनस्तृप्यताम्।

से व्यवस्थिताः' तक दो श्लोक पढ़कर "ॐ ब्रह्मा तृप्यताम्० से सर्वा-

न्तरात्मा परमेश्वरः प्रीयताम्" तक पढ़ता जाय व तर्पण करता जाय। इस प्रकार

ॐ सनातनस्तृप्यताम्। ॐ पृथिव्यादीनि पंचमहाभूतानि तृप्यन्ताम्। ॐ एकादशानि चक्षुरादिकरणानि तृप्यन्ताम्। ॐ चतुर्विधभूतग्रामस्तृप्यताम्। ॐ पिता तृप्यताम्। ॐ पितामहस्तृप्यताम्। ॐ प्रपितामहस्तृप्यताम्। ॐ माता तृप्यताम्। ॐ पितामही तृप्यताम्। ॐ प्रपितामही तृप्यताम्। ॐ आत्मा तृप्यताम्। ॐ पिता तृप्यताम्। ॐ पितामहस्तृप्यताम्। अनेन तर्पणेन सर्वान्तरात्मा परमेश्वरस्तृप्यताम्। इति तर्पणं विधाय गृहमागत्य गोमयोपलिप्ते शुचौ देशे वैश्वदेविकब्राह्मणयोर्द्वे आसने प्राङ्मुखे

तर्पण करके घर आकर गोबर से लिपे हुए शुद्ध स्थान में वैश्वदेविक दो ब्राह्मणों

१—पक्षे ॐ अन्तरात्मा तृप्यताम्। ॐ परमात्मा तृप्यताम्।

को दो आसन पूर्वमुख व उदक्[1]संस्थ रखना चाहिये। दैवादि अष्टश्राद्धसंबन्धि सोलह ब्राह्मणों को उत्तरमुख व प्रत्यक्संस्थ[2] सोलह आसन रखने चाहिये। तदनंतर स्वयं यजमान पूर्वमुख अपने आसन पर बैठकर आचमन प्राणायाम

उदक्संस्थे निधेये। दैवाद्यष्टश्राद्धसम्बन्धि षोडशब्राह्मणानामुदङ्मुखानि प्रत्यक्संस्थानि षोडशासनानि निधेयानि। ततः स्वयं प्राङ्मुखः स्वासने उपविश्याचम्य प्राणानायम्य पवित्रपाणिः कुशोपग्रहो वामकटिदेशे परिहितवस्त्रदशागोपनेन नीवीं बद्धा अपः स्पृश्य। देशकालौ संकीर्त्य अमुकगोत्रोऽमुकशर्मा अशेषदुःखनिवृत्तिनिर-

करके पवित्री पहिनकर कुश से युक्त बायें कटि प्रदेश में पहिने हुए वस्त्र की दशा छिपाकर नीवी बांधकर जल से हाथ में स्पर्श करके पहिले कहा हुआ

१-दक्षिण से आरम्भ करके उत्तर के तरफ खतम करने को उदक्संस्थ कहते हैं।
२-पूर्व से आरम्भ करके पश्चिम तरफ खतम करने को प्रत्यक्संस्थ कहते हैं।

संकल्प पढ़कर 'अमुकगोत्रो०' से लेकर 'करिष्ये' तक पढ़कर संकल्प करे। फिर अपने अपने स्थान पर ब्राह्मणों को बैठाकर वैश्वदैविक ब्राह्मणों के समीप स्वयं उत्तरमुख दहिना घुटना टेक कर बैठे। बाद वैश्वदेविक ब्राह्मणों के

तिशयानन्दप्राप्त्या परमपुरुषार्थप्राप्तये करिष्यमाणपरमहंससंन्यासाङ्गत्वेनाष्टौ श्राद्धानि सदैवानि पार्वणेन विधिना तंत्रेण करिष्ये। इति संकल्प्य स्वस्वस्थाने ब्राम्हणानुपवेश्य वैश्वदेविकब्राम्हणसन्निधौ स्वयमुदङ्मुखः पातितदक्षिणजानुरुपविश्य वैश्वदेविकब्राह्मणयोर्जानुनी उपस्पृश्य दक्षिणहस्ते पूगीफलं गृहीत्वा करिष्यमाणसंन्यासांगभूताद्यकर्तव्यदेवऋषिदिव्यमनुष्यभूतपितृमात्रात्मांताष्टश्राद्धसंबन्धिनांदीमुखसत्यवसुविश्वदेवकृत्ये भवतां चाम-

घुटनों को स्पर्श करके दहिने हाथ में दो सुपारी लेकर 'करिष्यमाण० से चामन्त्रये' तक पढ़कर दोनों ब्राह्मणों को एक एक सुपारी देकर निमन्त्रित करे।

'आमन्त्रितौ स्वः' यह प्रतिवचन ब्राह्मण कहें । प्रथम दैवश्राद्ध में उत्तर-मुख बैठे हुए ब्राह्मणों में पहिले बैठे हुए दो ब्राह्मणों के आगे स्वयं पूर्वमुख बैठकर उन दो ब्राह्मणों के घुटनों को स्पर्श करके दहिने हाथ में दो सुपारी ले

न्त्रये । इति पूगीफलमुभयोर्हस्ते दद्यात् । आमन्त्रितौ स्वः । इति प्रतिवचनम् । प्रथमे दैवश्राद्धे-उदङ्मुखोपविष्टानां मध्ये प्रागुपविष्ट-योर्विप्रयोरग्रे प्राङ्मुख उपविश्य तयोर्जानुनी उपस्पृश्य दक्षिणहस्ते पूगीफलं गृहीत्वा करिष्यमाणसंन्यासाङ्गत्वकर्तव्यदैवश्राद्धे नान्दी-मुखानां ब्रम्हविष्णुमहेश्वराणां स्थाने भवतां चामन्त्रये । इति पूगीफलं दद्यात् । आमन्त्रितौ स्वः । इति प्रतिवचनम् । एवं सर्वत्र ।

'करिष्यमाण० से चामन्त्रये' तक पढ़कर दोनों ब्राह्मणों को एक एक सुपारी देकर निमन्त्रित करे । 'आमन्त्रितौ स्वः' यह प्रतिवचन ब्राह्मण कहें । इस प्रकार सब जगह करे । अब दूसरे ऋषिश्राद्ध में दूसरे दो ब्राह्मणों के घुटनों को

स्पर्श करके दाहिने हाथ में दो सुपारी लेकर 'करिष्यमाण० से चामन्त्रये' तक पढ़कर दोनों ब्राह्मणों को एक एक सुपारी देकर निमन्त्रित करे। 'आमन्त्रितौ स्वः' यह प्रतिवचन ब्राह्मण कहें। अब तीसरे दिव्य श्राद्ध में दूसरे दो ब्राह्मणों

द्वितीये ऋषिश्राद्धे—तदपरयोर्जानुनी उपस्पृश्य दक्षिणहस्ते पूगीफलं गृहीत्वा करिष्यमाणऋषिश्राद्धे नान्दीमुखानां देवर्षिब्रह्मर्षिक्षत्रर्षीणां स्थाने भवतां चामन्त्रये। इति पूगीफलं दद्यात्। आमन्त्रितौ स्वः। इति प्रतिवचनम्। तृतीये दिव्यश्राद्धे—तदपरयोर्जानुनो उपस्पृश्य दक्षिणहस्ते पूगीफलं गृहीत्वा करिष्यमाणदिव्यश्राद्धे नान्दीमुखानां वसुरुद्रादित्यानां स्थाने भवतां चामन्त्रये। इति पूगीफलं दद्यात्। आमन्त्रितौ स्वः। इति प्रतिवचनम्। चतुर्थे मातृ-

के घुटनों को स्पर्श करके दहिने हाथ में दो सुपारी लेकर करिष्यमाण० से चामन्त्रये' तक पढ़कर दोनों ब्राह्मणों को एक एक सुपारी देकर निमन्त्रित करे।

'आमन्त्रितौ स्वः' यह प्रतिवचन ब्राह्मण कहें। फिर चौथे मानुषश्राद्ध में दूसरे दो ब्राह्मणों के घुटनों को स्पर्श करके दाहिने हाथ में दो सुपारी लेकर 'करिष्यमाण० से चामन्त्रये' तक पढ़कर दोनों ब्राह्मणों को एक एक सुपारी देकर निमन्त्रितं

षश्राद्धे–तदपरयोर्जानुनी उपस्पृश्य दक्षिणहस्ते पूगीफलं गृहीत्वा करिष्यमाणमनुष्यश्राद्धे नान्दीमुखानां सनकसनन्दनसनातनानां स्थाने भवतां चामन्त्रये। इति पूगीफलं दद्यात्। आमन्त्रितौ स्वः। इति प्रतिवचनम्। पञ्चमे भौमिश्राद्धे–तदपरयोर्जानुनी उपस्पृश्य दक्षिणहस्ते पूगीफलं गृहीत्वा करिष्यमाणभूतश्राद्धे नान्दीमुखानां पृथिव्यादिपंचमहाभूतैकादशचक्षुरादिकरण चतुर्विधभूतग्रामाणां स्थाने भवतां चामन्त्रये। इति पूगीफलं

करे। 'आमन्त्रितौ स्वः' यह प्रतिवचन ब्राह्मण कहें। पाँचवें भूत श्राद्ध में दूसरे दो ब्राह्मणों के घुटनों को स्पर्श करके दाहिने हाथ में दो सुपारी लेकर 'करिष्य-

माण० से चामन्त्रये' तक पढ़ कर दोनों ब्राह्मणों को एक एक सुपारी देकर निमन्त्रित करे। 'आमन्त्रितौ स्वः' यह प्रतिवचन ब्राह्मण कहें। छठे पितृश्राद्ध में दूसरे दो ब्राह्मणों के घुटनों को स्पर्श करके दाहिने हाथ में दो सुपारी लेकर

द्द्यात् । आमन्त्रितौ स्वः । इति प्रतिवचनम् । षष्ठे पैत्रिके श्राद्धे-तदपरयोर्जानुनी उपस्पृश्य दक्षिणहस्ते पूगीफलं गृहीत्वा करिष्यमाणपितृश्राद्धे नान्दीमुखानां पितृपितामहप्रपितामहानां स्थाने भवतां चामन्त्रये। इति पूगीफलं द्द्यात् । आमन्त्रितौ स्वः । इति प्रतिवचनम् । सप्तमे मात्रिके श्राद्धे-तदपरयोर्जानुनी उपस्पृश्य दक्षिणहस्ते पूगीफलं गृहीत्वा करिष्यमाणमातृश्राद्धे नान्दी-

'करिष्यमाण० से चामन्त्रये' तक पढ़ कर दोनों ब्राह्मणों को एक एक सुपारी देकर निमन्त्रित करे। 'आमन्त्रितौ स्वः' यह प्रतिवचन ब्राह्मण कहें। सातवें मात्रिक श्राद्ध में दूसरे दो ब्राह्मणों के घुटनों को स्पर्श करके दहिने हाथ में

दो सुपारी लेकर 'करिष्यमाण० से चामन्त्रये' तक पढ़कर दोनों ब्राह्मणों को एक एक सुपारी देकर निमन्त्रित करे। 'आमन्त्रितौ स्वः' यह प्रतिवचन ब्राह्मण कहें। आठवें आत्मश्राद्ध में दूसरे दो ब्राह्मणों के घुटनों को स्पर्श करके दाहिने हाथ

मुखोनां मातृपितामहिप्रपितामहीनां स्थाने भवतां चामन्त्रये। इति पूगीफलं दद्यात्। आमन्त्रितौ स्वः। इति प्रतिवचनम्। अष्टमे आत्मश्राद्धे-तदपरयोर्जानुनी उपस्पृश्य दक्षिणहस्ते पूगीफलं गृहीत्वा करिष्यमाणआत्मश्राद्धे आत्मपितृपितामहानां स्थाने भवतां चामन्त्रये। इति पूगीफलं दद्यात्। आमन्त्रितौ स्वः। इति प्रतिवचनम्। इत्यष्टादश ब्राम्हणान्निमन्त्र्य तेषां पादान्प्रक्षाल्य

में दो सुपारी लेकर 'करिष्यमाण० से चामन्त्रये' तक पढ़ कर दोनों ब्राह्मणों को एक एक सुपांरी देकर निमन्त्रित करे। 'आमन्त्रितौ स्वः' यह प्रतिवचन ब्राह्मण कहें। इस प्रकार अठारह ब्राह्मणों को निमन्त्रित करके उन ब्राह्मणों के पैर धोकर

आसनों पर दर्भों को बिछा कर पहिले की तरह वैश्वदेविक ब्राह्मणों को पूर्वमुख और देवाद्यष्टश्राद्धसंबन्धि ब्राह्मणों को उत्तरमुख बैठा कर प्रार्थना

आसनेषु दर्भानास्तीर्य यथापूर्वं वैश्वदेविकब्राह्मणान् प्राङ्मुखान् दैवाद्यष्टश्राद्धसम्बन्धिब्राह्मणानुदङ्मुखानुपविश्य प्रार्थयेत्। संन्यासार्थमहं श्राद्धं कुर्वे ब्रूत द्विजोत्तमाः। अनुज्ञां प्राप्य युष्माकं सिद्धिं प्राप्स्यामि शाश्वतीम् ॥१॥ गर्भवासभयाद्भीतस्तथा तापत्रयादिति। गुहां प्रवेष्टुमिच्छामि परं पदमनामयम् ॥ २ ॥ इति संप्रार्थ्य। 'ॐ कुरु' इति द्विजैरुक्ते वैश्वदेविकविप्रयोः समीपे उदङ्मुखः पातितदक्षिणजानुरुपविश्य सव्येन

करे। 'संन्यासार्थं० से मनामयम्' तक इन दो श्लोकों से प्रार्थना करके फिर 'ॐ कुरु' ऐसा ब्राह्मणों के कहने पर वैश्वदेविक ब्राह्मणों के समीप उत्तरमुँह दहिना

घुटना मोड़ कर बैठकर बायें हाथ से दोनों ब्राह्मणों के घुटनों को स्पर्श करके दहिने हाथ से यवों से प्रदक्षिण यव छींटे। 'ॐ नान्दी० से वाहयिष्ये' तक पढ़कर आवाहन करे। 'ॐ आवाहय' ऐसी ब्राह्मणों के आज्ञा देने पर 'ॐ विश्वे-

पाणिना उभयोर्जानुनी उपस्पृश्य दक्षिणेन पाणिना यवैः प्राद्‌क्षिण्येन यवावकिरणम्। ॐ नान्दीमुखान् सत्यवसुविश्वान्देवानावाहयिष्ये। ॐ आवाहय। इत्यनुज्ञाते ॐ विश्वेदेवासऽआगत शृणुतामऽइमꣳहवम्॥ एदम्बर्हिर्निषीदत। इति मन्त्रेण प्रदक्षिणं यवावकिरणं। ततः सस्वरं जपः। ॐ विश्वेदेवाः शृणुतेमꣳहवम्मे-येऽअन्तरिक्षऽउपद्यविष्ठ॥ येऽअग्निजिह्वाऽउतवायजत्राऽआसद्यास्मिन्बर्हिषि मादयध्वम्। इति। ततः षोडशब्राह्मणानां

देवा० निषीद।' इस मंत्र से प्रदक्षिण यव छोड़े। फिर 'ॐ विश्वेदेवाः से मादयध्वम्' इस मंत्र का स्वरसहित जप करे। वैश्वदेविक ब्राह्मणों के आवाहन

करने के बाद सोलह ब्राह्मणों में पहले कहे हुए क्रम से दो दो ब्राह्मणों के आगे दहिना घुटना मोड़ कर उत्तर मुँह बैठ कर बायें हाथ से घुटनों को स्पर्श करके दहिने हाथ से प्रदक्षिण यव छोड़े। 'ॐनान्दी० से यिष्ये' तक कहे। 'ॐ

मध्ये पूर्ववत्क्रमेण द्वयोर्द्वयोरग्रतः पातितदक्षिणजानुरुदङ्मुख उपविश्य सव्येन पाणिना जानुनी उपस्पृश्य दक्षिणेन पाणिना प्रदक्षिणं यवावकिरणम्। ॐ नान्दीमुखान् ब्रह्मविष्णुमहेश्वरानावाहयिष्ये। ॐ आवाहय। ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। सभूमिं सर्वतस्पृत्वात्यतिष्ठद्दशांगुलम्। इति प्रदक्षिणं यवावकिरणम्। सर्वत्रायं मंत्रो जान्वालंभो यवावकिरणं प्रादक्षिण्येन। तदपरयोर्द्वयोः। नान्दीमुखान्देवर्षिब्रह्मर्षिक्षत्रर्षीनावा-

आवाहय' ऐसा ब्राह्मणों के कहने पर 'ॐ सहस्रशीर्षा०' इस मंत्र से प्रदक्षिण यव छोड़े। सब जगह इसी मन्त्र से जान्वालंभ और प्रदक्षिण यवाव-

किरण करे। फिर दूसरे दो ब्राह्मणों को 'नान्दी० से यिष्ये' तक कहे। 'ॐ आवाहय' ऐसा ब्राह्मण कहें। फिर दूसरे दो ब्राह्मणों को नान्दी० से यिष्ये' तक कहे। 'ॐ आवाहय' ऐसा ब्राह्मण कहें। फिर दूसरे दो ब्राह्मणों

हयिष्ये। ॐ आवाहय। तदपरयोर्द्वयोः। नान्दीमुखान्वसुरुद्रादित्यानावाहयिष्ये। ॐ आवाहय। तदपरयोर्द्वयोः। नान्दीमुखान् सनकसनन्दनसनातनानावाहयिष्ये। ॐ आवाहय। तदपरयोर्द्वयोः। नान्दीमुखान् पृथिव्यादिपंचमहाभूतैकादशचक्षुरादिकरणचतुर्विधभूतग्रामानावाहयिष्ये। ॐ आवाहय। तदपरयोर्द्वयोः। नान्दीमुखान् पितृपितामहप्रपितामहानावाहयिष्ये[1]।

को 'नान्दी० से यिष्ये' तक कहे। 'ॐ आवाहय' ऐसा ब्राह्मण कहें। फिर दूसरे दो ब्राह्मणों को 'नान्दी० से यिष्ये' तक कहे। 'ॐ आवाहय' ऐसा ब्राह्मण

१ मातापित्रोरावाहने उशंतस्त्वा इति मंत्रः पठनीयः।

कहें। फिर दूसरे दो ब्राह्मणों को 'नान्दी० से यिष्ये' तक कहे। 'ॐ आवाहय' ऐसा ब्राह्मण कहें। 'उशन्तस्त्वा०' इस मंत्र से पितरों का आवाहन करे। फिर दूसरे दो ब्राह्मणों को 'नान्दीमुखी० से यिष्ये' तक कहे। 'ॐ आवाहय' ऐसा

ॐ आवाहय। अत्रावाहने पितृस्त्वादुशन्तस्त्वेति मंत्रः। ॐ उशंतस्त्वानिधीमह्युशन्तः समिधीमहि॥ उशन्नुशत आवह पितॄन्हविषे अत्तवे। तदपरयोर्द्वयोः। नान्दीमुखीमातृपितामहीप्रपितामहीरावाहयिष्ये। ॐ आवाहय। अत्राप्युशन्तस्त्वेत्यावाहनम्। उशन्तस्त्वा० अत्तवे। तदपरयोर्द्वयोः। नान्दीमुखानात्मपितृपितामहानावाहयिष्ये। ॐ आवाहय। इत्यावाह्य। ॐ आयंतु नः

ब्राह्मण कहें। यहाँ भी 'उशंतस्त्वा०' इसी मंत्र से आवाहन करे। फिर दूसरे दो ब्राह्मणों को 'नान्दी० से यिष्ये' तक कहे। 'ॐ आवाहय' ऐसा ब्राह्मण कहें। इस प्रकार आवाहन करके 'ॐ आयन्तुनः' इस मंत्र का स्वरसहित जप

करे। तदनंतर उत्तरमुख वैश्वदेविक अर्घपात्र को ब्राह्मणों के आगे पूर्वाग्र रख कर उसमें पूर्वाग्र पवित्र को रखकर 'शन्नो देवी०' इस मंत्र से देवतीर्थ से जल छोड़े।

पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः ॥ अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु ते वन्त्वस्मान् ॥ अस्य मंत्रस्य सस्वरं जपः। तत उदङ्मुखो वैश्वदेविकार्घ्यपात्रं तदग्रे प्रागग्रमासाद्य तस्मिन् प्रागग्रं पवित्रं निधाय। ॐ शन्नो देवीरभिष्टय आपो भवन्तु पीतये। शंय्योरभिस्रवन्तु नः। इति देवतीर्थेन जलासेकः। यवोसि सोमदेवत्यो गोसवो देवनिर्मितः। प्रत्नमद्भिः पृक्तः पुष्ट्या ॥ नान्दीमुखान् पितृलोकान्प्रीणाहि नः स्वाहा। इति यवप्रक्षेपः। तूष्णीं गन्धपुष्पप्रक्षेपः। देवार्घपात्रं संपन्नमस्तु। इति कृतांजलिर्वदेत्।

'यवोसि० पुष्ट्या' इस मंत्र से यव छोड़े। चुपचाप गन्ध फूल छोड़े। 'देवार्घपात्रं सम्पन्नमस्तु' हाथ की अंजली करके ऐसा कहे। 'अस्तु' यह प्रतिवचन ब्राह्मण

कहें। अनंतर पूर्वमुख बैठ कर हरेक दो दो ब्राह्मणों के आगे तीन तीन अर्घ-पात्र रख कर हरेक पात्र में दो दो पवित्र प्रागग्र रख कर उन पात्रों में 'शन्नो देवी०' इस मंत्र से देवतीर्थ से जल छोड़े। यव छोड़ने के मंत्र में हरेक दो

अस्तु। इति प्रतिवचनम्। अथ प्राङ्मुखः प्रतिवर्गं त्रीणि त्रीणि अर्घपात्राणि प्रत्यगुपक्रमाणि प्रागग्राणि प्रागपवर्गाणि दक्षिणसंस्थान्यासाद्य प्रतिपात्रं द्वे द्वे पवित्रे प्रागग्रे निधाय तेषु शंन्नोदेवीरिति मंत्रावृत्त्या देवतीर्थेन जलासेकः। यवावापमंत्रे प्रतिवर्गपात्रत्रये यथादेवतमूहः। प्रथमवर्गत्रये-यवोसि सोमदेवत्यो गोसवो देवनिर्मितः। प्रत्नमद्भिः पृक्तः पुष्ट्या ॥ नान्दीमुखान् देवान् लोकान् प्रीणाहि नः स्वाहा। इति। द्वितीयवर्गत्रये-यवोसि० नान्दीमुखान्-

ब्राह्मणों के आगे रखे हुए तीन पात्र में जहाँ जिस देवता का विधान है वहाँ उसी देवता का उच्चारण करे। 'प्रथमवर्गत्रये से इति यवान्प्रक्षिप्य' तक पढ़ता

जाय और हर एक वर्गत्रय में 'यवोसि०' इस मंत्र से यव छोड़ता जाय।

षीन्लोकान्प्रीणाहि नः स्वाहा। इति। तृतीयवर्गत्रये–यवोसि० नान्दीमुखान् दिव्यान् लोकान्प्रीणाहि नः स्वाहा। इति। चतुर्थवर्गत्रये-यवोसि० नान्दीमुखान्मनुष्यलोकान्प्रीणाहि नः स्वाहा। इति। पञ्चमवर्गत्रये–यवोसि० नान्दीमुखान्भूतान् लोकान्प्रीणाहि नः स्वाहा। इति। षष्ठवर्गत्रये–यवोसि० नान्दीमुखान्पितॄँल्लोकान्प्रीणाहि नः स्वाहा। इति। सप्तमवर्गत्रये–यवोसि० नान्दीमुखान्मातृलोकान्प्रीणाहि नः स्वाहा। इति। अष्टमवर्गत्रये–नान्दीमुखानात्मनो लोकान्प्रीणाहि नः स्वाहा। इति यवान्प्रक्षिप्य। समाचारात्तूष्णीं गन्धपुष्पाणि प्रक्षिप्य कृतांजलिना अर्घपात्रसम्पत्तिरस्तु। इति ब्रूयात्।

चुपचाप गंध फूल छोड़ कर ब्राह्मणों के आगे दोनों हाथ की अंजलि करके

 'अर्घपात्रसंपत्तिरस्तु' ऐसा कहे। 'अस्त्वर्घसम्पत्तिः' ऐसा ब्राह्मण कहें। तदनंतर 
 दहिना घुटना मोड़ कर उत्तरमुख वैश्वदेविक ब्राह्मणों के आगे बैठ कर दूसरे देवब्राह्मण के दाहिने हाथ पर पहले देवब्राह्मण का दाहिना हाथ रख कर उस

अस्त्वर्घसम्पत्तिः। इति ब्राह्मणा ब्रूयुः। तत उदङ्मुखः पातितदक्षिणजानुर्देवाग्र उपविश्य द्वितीयदेवब्राह्मणदक्षिणहस्ते प्रथमदेवविप्रदक्षिणकरं निधाय तस्मिन्देवार्घपात्रस्थयोः प्रागग्रयोः पवित्रयोर्निवेशनम्। अंजलिनार्घपात्रमादाय। ॐ या दिव्या आपः पृथिवी संबभूवुर्या अन्तरिक्षा वुत पार्थिवीर्याः। हिरण्यवर्णा यज्ञियास्तान आपः शꣳस्योना भवंतु। सत्यवसुविश्वेदेवा एष वोऽर्घः। इत्यर्घं दत्वा। उदङ्मुखोपविष्टानामाद्ययोर्विप्रयोः पुरस्तात् प्राङ्मुखः पातितदक्षिण-

में देवार्घपात्र में रखे हुए प्रागग्र पवित्रों को रखे। अंजलि से अर्घपात्र लेकर 
'ॐ या दिव्या०' यह मंत्र पढ़ कर 'सत्यवसुविश्वेदेवा एष वो र्घः' ऐसा कह कर

अर्घ दे। फिर उत्तर मुंह बैठे हुए ब्राह्मणों के आगे पूर्वमुख दहिना घुटना मोड़ कर बैठ कर दूसरे ब्राह्मण के दहिने हाथ में पहिले ब्राह्मण का दहिना हाथ रखकर उस हाथ पर पहिले अर्घ पात्र में रखे हुए पवित्रों को रखकर अंजलि से

जानुरुपविश्य द्वितीयविप्रदक्षिणकरे प्रथमविप्रदक्षकरं निधाय तत्र प्रथमार्घपात्रस्थे पवित्रे निधाय अञ्जलिनार्घपात्रमादाय ॐ या दिव्या० भवन्तु। नान्दीमुख ब्रह्मन्नेष तेऽर्घः। या दिव्या० इति मन्त्रः प्रत्यर्घमावर्तनीयः। एवं प्रत्यर्घपवित्रे विप्रहस्ते निदायार्घो देयः। या दिव्या० नान्दीमुख विष्णो एषतेऽर्घः। या दिव्या० नान्दीमुखमहेश्वर एष तेऽर्घः। तदुपरयोर्हस्ते निधानं पूर्ववत्। सर्व-

अर्घपात्र लेकर 'या दिव्या०' यह मंत्र पढ़कर 'नान्दीमुख ब्रह्मन्नेष तेऽर्घः' ऐसा कहकर अर्घ दे। 'या दिव्या०' यह मंत्र हर एक अर्घ देने में पढ़ना चाहिये। ऐसे ही हरएक अर्घ पात्र में रखे हुए पवित्रों को ब्राह्मण के हाथ में रखकर

त्रायमेव न्यायः। या दि०्या० नान्दीमुखा देवर्षय एष वोऽर्घः । या दि०्या० नान्दीमुखा ब्रह्मर्षय एष वोऽर्घः। या दि०्या० नान्दीमुखा क्षत्रर्षय एष वोऽर्घः। तदपरयोर्विप्रयोः । या दि०्या० नान्दीमुखा वसव एष वोऽर्घः । या दि०्या नान्दीमुखा रुद्रा एष वोऽर्घः । या दि०्या० नान्दीमुखा आदित्या एष वोऽर्घः । तदपरयोर्विप्रयोः । या दि०्या० नान्दीमुख सनक एष वोऽर्घः ।या दि०्या० नान्दीमुख सनन्दन एष वोऽर्घः । या दि०्या० नान्दीमुख सनातन एष वोऽर्घः । तदपरयोर्विप्रयोः । या दि०्या० नान्दीमुखानि पंचमहाभूतानि एष वोऽर्घः । या दि०्या० नान्दीमुखान्येकादशचक्षुरादिकरणान्येष वोऽर्घः । या दि०्या० नान्दीमुख

अर्घ दे। इस प्रकार सब ब्राह्मणों के हाथ में अर्घ दे। सब जगह यही

नियम है। 'या दिव्या० नान्दीमुखा देवर्षय० से पितामह एष तेऽर्घः' तक पढ़ता जाय और ऊपर कहे हुए क्रम से अर्घ देता जाय। इस प्रकार अर्घदान करके

चतुर्विधभूतग्राम एष तेऽर्घः। तदपरयोर्विप्रयोः। या दिव्या० नान्दीमुख पितः एष तेऽर्घः। या दिव्या० नान्दीमुख पितामह एष तेऽर्घः। या दिव्या० नान्दीमुख प्रपितामह एष तेऽर्घः। तदपरयोर्विप्रयोः। या दिव्या० नान्दीमुखी मातः एष तेऽर्घः। या दिव्या० नान्दीमुखी पितामही एष तेऽर्घः। या दिव्या० नान्दीमुखी प्रपितामही एष तेऽर्घः। तदपरयोर्विप्रयोः। या दिव्या० नान्दीमुख आत्मन्नेष तेऽर्घः। या दिव्या० नान्दीमुख पितः एष तेऽर्घः। या दिव्या० नान्दीमुख पितामह एष तेऽर्घः। इत्यर्घदानं कृत्वा प्रथमे पात्रे सँस्रवात्समवनीयेत्यनेनाद्ये ब्रह्मार्घपात्रे

'सँस्रवान्समवनीय' इस मंत्र से पहिले ब्रह्मार्घ पात्र में सब अर्घ पात्रों का जल रख

कर वह पात्र सोलह ब्राह्मणों में पहिले ब्राह्मण के दक्षिण पार्श्व में कुछ दूर-भूमि प्रोक्षण करके तीन कुश रखकर उस पर 'पितृभ्यः स्थानमसि' कहकर औंधा दे। उस पर स्वाहावाचनीय नाम के अग्रसहित प्रादेशप्रमाण तीन कुश रखे। यहाँ पर

सर्वेषामर्घपात्राणां संस्रवजलमवनीय तत्पात्रं शोडषानामाद्यस्य दक्षिणपार्श्वे किञ्चिद्दूरे सञ्चरप्रदेशे भूमिमभ्युक्ष्य कुशत्रयं निधाय तस्मिन्पितृभ्यः स्थानमसि । इति न्युब्जं निदधाति। तदुपरि स्वाहावाचनीयसंज्ञकानां साग्राणां प्रादेशमात्राणां कुशत्रयाणां निधानं। अत्र गन्धपुष्पधूपदीपवाससां च प्रदानं देवपूर्वं ब्राह्मणेभ्यः । तच्चेत्थम्। ब्राह्मणहस्तेषु प्रत्येकं गन्धपुष्पधूपदीपयज्ञोपवीतफलवासांसि

देव पूर्वक ब्राह्मणों को गन्धपुष्पधूपदीप वस्त्र दे। इस प्रकार हर एक ब्राह्मणों के हाथ में गंधादि समर्पण करके कुशयव जल लेकर संकल्प करके पृथ्वी पर जल छोड़े। आगे लिखे क्रम से देवपूर्वक ब्राह्मणों को गंधपुष्पादि देकर कुशयव जल हाथ में

लेकर 'ॐ सत्य० से नमः' तक पढ़ कर पृथ्वीपर जल छोड़े। फिर पूर्वमुख दहिना घुटना टेक कर बैठे और प्रत्येक दो दो ब्राह्मणों को देवता का उच्चारण

समर्प्य कुशयवजलान्यादाय संकल्प्य भूमौ जलप्रक्षेपः कार्यः। तत्र क्रमः। देवसम्बन्धिब्राह्मणानां गन्धपुष्पधूपदीपयज्ञोपवीतफलवासांसि दत्वा कुशयवजलान्यादाय ॐ सत्यवसुविश्वेदेवा इमानि गन्धपुष्पधूपदीपयज्ञोपवीतफलवासांसि वो नमः। इति भूमौ जलं क्षिपेत्। ततः प्राङ्मुखोपविष्टेन पातितदक्षिणजानुना यथाक्रमं षोडशेभ्यो गन्धपुष्पधूपदीपयज्ञोपवीतफलवासांसि दत्वा द्वाभ्यां द्वाभ्यामग्रत उपविश्य यथादैवतमुद्दिश्य कुशयवजलान्यादाय भूमावेव जलमुत्सृजेत्। तत्र प्रथमविप्रयुग्माग्रे—ॐ नान्दीमुखा ब्रह्मविष्णुमहे-

करके गंधपुष्पादि प्रत्येक को दे व कुशयवजल पृथ्वी पर जल छोड़े। उसमें पहिले दो ब्राह्मणों के आगे 'ॐ नांदीमुखा ब्रह्मविष्णुमहेश्वरा इमानि गंध-

पुष्पधूपदीपफलवासांसि वः स्वाहा'। दूसरे दो ब्रह्मणों के आगे' ॐ नांदी० से वः स्वाहा'। तीसरे दो ब्राह्मणों के आगे 'ॐ नांदी० से वः स्वाहा'। चौथे दो

श्वरा इमानि गन्धपुष्पधूपदीपयज्ञोपवीतफलवासांसि वः स्वाहा। द्वितीयविप्रयुग्माग्रे–ॐ नान्दीमुखा देवर्षिब्रह्मर्षिराजर्षय इमानि गंध० वः स्वाहा। तृतीयविप्रयुग्माग्रे–ॐ नान्दीमुखा वसुरुद्रादित्या इमानि गन्ध० वः स्वाहा। चतुर्थविप्रयुग्माग्रे–ॐ नान्दीमुखा सनकसनंदनसनातना इमानि गंध० वः स्वाहा। पञ्चमविप्रयुग्माग्रे–ॐ नान्दीमुखाः पृथिव्यादिपंचमहाभूतैकादशकरण-चतुर्विधभूतग्रामा इमानि गंध० वः स्वाहा। षष्ठविप्रयुमाग्रे–नान्दीमुखा पितृपितामहप्रपितामहा इमानि गन्ध० वः स्वाहा।

ब्राह्मणों के आगे 'ॐ नांदी से वः स्वाहा'। पांचवे दो ब्राह्मणों के आगे 'ॐ नांदी० से वः स्वाहा'। छठे दो ब्राह्मणों के आगे 'ॐ नांदी० से वः स्वाहा'।

सातवें दो ब्राह्मणों के आगे 'ॐ नांदी० से वः स्वाहा'। आठवें दो ब्राह्मणों के आगे 'ओं नांदी० से वः स्वाहा'। इस प्रकार पूजाकर हाथ जोड़ कर प्रार्थना करे और

सप्तमविप्रयुग्माग्रे—ॐ नांदीमुख्यो मातृपितामहीप्रपितामह्यः इमानि गन्ध० वः स्वाहा। अष्टमविप्रयुग्माग्रे—ॐ नान्दीमुखा आत्मपितृपितामहा इमानि गन्ध० वः स्वाहा। इति सम्पूज्य अञ्जलिं बध्वा प्रार्थयेत्। मयाचरिताष्टश्राद्धांगब्राह्मणार्चनविधौ यन्न्यूनातिरिक्तं तत्परिपूर्णमस्तु। अस्त्विति ब्राह्मणा ब्रूयुः। द्विजाग्रपतितानां यवादीनां निरसनम्। ततो देवपूर्वं सर्वेषां ब्राह्मणानामग्रतो जलेन चतुरस्रमंडलकरणम्। तत्र भोजनपात्रनिधानं तत्समीपे भूमावेव व्यञ्जनपात्रनिधानम्। ततस्ताम्रादिपात्रे अभि-

'मया० से मस्तु' तक कहे। ब्राह्मण 'अस्तु' ऐसा कहें। फिर ब्राह्मणों के आगे पानी से चौकोन मंडल करे। वहां पर भोजन पात्र व उसके समीप जमीन पर

व्यंजन पात्र रखे। फिर ताम्रादि पात्र में घी छोड़े हुए भात में से भात निकाल कर सोलह ब्राह्मणों में श्रेष्ठ ब्राह्मण के जल से धोये हुए दहिने हाथपर प्रादेशमात्र अग्रसहित तीन कुश रख अग्नौकरण होम करे। होमविधि-दहिने हाथ से आहुति बराबर

घारितोदनादन्नमुद्धृत्य षोडशब्राह्मणानां मध्ये पङ्क्तिमूर्द्धन्यविप्रस्य जलाभ्युक्षिते दक्षिणपाणौ प्रादेशमात्रं साग्रं कुशत्रयमग्नितीर्थे निधायाग्नौकरणहोमः। तत्र विधिः। दक्षिणेन पाणिना आहुतिपर्याप्तमोदनं गृहीत्वा। ॐ अग्नये कव्यवाहनाय स्वाहा। इति पाणावग्नितीर्थेन हस्तेनैव जुहुयात्। इदमग्नये कव्यवाहनाय न मम। इति त्यागः। तथैव ॐ सोमाय पितृमते स्वाहा। इदं सोमाय पितृमते न मम। अप उपस्पृश्य। ततो देवपूर्वं भाजनान्यभिघार्य

भात लेकर 'ओं अग्नये० से न मम' और 'ॐ सोमाय० से न मम' तक कहे और दो आहुति ब्राह्मण के हाथ पर दे। पानी का स्पर्श कर

के देवता के पात्र से आरंभ करके सब पात्रों को थोड़ा २ घृत लगा कर तरकारी, खीर घृतयुक्त भात परोस कर बाद हुतशेष सब पात्रों पर देकर पात्र में हाथ लगा कर 'पृथिवी ते०' इस मंत्र को जपे। देव ब्राह्मण से लेकर सब

तेषु सव्यंजनं सपायसं घृतोपेतमन्नं परिवेश्यानंतरं हुतशेषं दत्वा पात्रमालभ्य पृथिवीते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा। इति जपेत्। देवपूर्वं सर्वत्र हुतशेषदानम्। तत उदङ्मुखः पातितदक्षिणजानुर्देवसमीप उपविश्य स्वस्तिकाकृतिभ्यामधोमुखाभ्यां पाणिभ्यामुत्तानन्युब्जाभ्यां वामदक्षिणाभ्यां पाणिभ्यां वा वैश्वदेविकविप्रपात्रमालभ्य 'ॐ पृथिवीते पात्रं०

जगह हुतशेष का दान करे। बाद उत्तरमुख दहिना घुटना टेककर देवसमीप बैठकर स्वस्तिकाकार अधोमुख हाथ से अथवा बायां हाथ सीधा और दाहिना हाथ औंधा करके वैश्वदेविक विप्रपात्र को पकड़ कर 'पृथिवी ते० स्वाहा' यह मंत्र पढ़े।

'इदं विष्णुर्वि०सुरे स्वाहा' 'विष्णो हव्य ६ रक्षस्व' इस मंत्र से अधोमुख नखरहित ब्राह्मण के अंगूठे को भात में घुसावे। इसी तरह दूसरे वैश्वदेविक विप्रपात्र को

स्वाहा' इति मन्त्रः पठनीयः। वैष्णव्यर्चा यजुषा अङ्गुष्ठमन्नेऽवगाह्य। इदं विष्णुर्विचक्रमेत्रेधानिदधेपदम्। समूढमस्यपाᳬसुरे स्वाहा। विष्णोहव्यᳬरक्षस्व। इति मन्त्रेण द्विजाङ्गुष्ठमधोमुखमनखमन्नेऽवगाह्य। एवं द्वितीयवैश्वदेविकविप्रपात्रालंभोऽवगाहश्च। अत्रेतावान्विशेषः। प्रत्येकपात्रेऽङ्गुष्ठावगाहानंतरं ॐ अपहता असुरारक्षांसिव्वेदिषदः। इति मन्त्रेण प्रदक्षिणं यवानवकीर्य। उदकोपस्पर्शः। प्रादक्षिण्येन यवा-

करे। ऐसे ही सब ब्राह्मणों के पात्र में करे। हरेक पात्र में अँगूठा घुसाने के बाद 'ॐ अपहता० से व्वेदिषदः' तक पढ़े और हरेक पात्र पर प्रदक्षिण यव छोड़े। जल का स्पर्श करके अन्न का संकल्प करे। वैश्वदेविक विप्रों के समीप

उत्तरमुख दहिना घुटना टेककर बैठकर कुश यव जल दहिने हाथ में लेकर बायें हाथ से वैश्वदेविक दोनों पात्रों को पकड़ कर 'ओं सत्यवसु० से वो नमः' तक

वकिरणं प्रतिपात्रे 'अपहता०' इति मंत्रेण । अपस्पर्शश्च । ततोऽन्न-संकल्पः । वैश्वदेविकविप्रसमीपे उदङ्मुखः पातितदक्षिणजानुरुप-विश्य कुशयवजलानि दक्षिणहस्ते गृहीत्वा वामहस्तेन वैश्वदेविक-विप्रपात्रद्वयमालभ्य ॐ सत्यवसु बिश्वेदेवा इदमन्नं सोपकरणं परिविष्टं परिवेष्यमाणं युग्मब्राह्मणतृप्तिक्षमं अमृतरूपेण वो नमः । इति भूमौ पात्रसमीपे जलोत्सर्गः । ततः प्राङ्मुखः पातितदक्षजा-नुरष्टश्राद्धीयब्राह्मणानां मध्ये क्रमेण प्रतिवर्गं द्वाभ्यां द्वाभ्याम-ग्रत उपविश्य दक्षहस्ते कुजयवजलान्यादाय वामहस्तेन आद्यवर्ग-

पढ़कर जमीन में पात्र के पास जल छोड़े । बाद पूर्वमुख दहिना घुटना टेककर अष्टश्राद्धीय ब्राह्मणों में क्रम से दो दो ब्राह्मणों के आगे बैठकर दहिने हाथ में कुश

यव जल लेकर बायें हाथ से पहिले दो ब्राह्मण के दोनों पात्र पकड़ कर 'ओं नांदी' से वः स्वाहा' तक कह कर पृथ्वीपर जल छोड़े। इसी तरह आगे भी दो दो

सम्बधिविप्रपात्रद्वयमालभ्य ॐ नांदीमुखा ब्रह्मविष्णुमहेश्वरा इदमन्नं सोपकरणं परिविष्टं परिवेष्यमाणं युग्मब्राह्मणतृप्तिक्षमममृतरूपेण वः स्वाहा। इति भूमौ जलं क्षिपेत्। एवं द्वितीयादिवर्गसम्बंधिविप्रद्वयपात्रयोः क्रमेण पात्रालंभादिजलप्रक्षेपान्तम्। देवतोहस्त्वित्थम्। द्वितीयवर्गे—ॐ नान्दीमुखा देवर्षिब्रह्मर्षिराजर्षय इदमन्नं सोपकरणं परिविष्टं परिवेष्यमाणं युग्मब्राह्मणतृप्तिक्षममममृतरूपेण वः स्वाहा। तृतीयवर्गे—ॐ नान्दीमुखा वसुरुद्रादित्या इदमन्नं सोपकरणं परिविष्टं परिवेष्यमाणं युग्म-

ब्राह्मणों के आगे पात्रालंभ से जलप्रक्षेपान्त तक करे। देवता का उच्चार मूल में लिखे मुताबिक करे। द्वितीय वर्ग से अष्टम वर्ग तक मंत्र पढ़कर पृथ्वीपर जल

ब्राह्मणतृप्तिक्षममम‍ृतरूपेण वः स्वाहा। चतुर्थवर्गे—ॐनान्दीमुखा सनकसनन्दनसनातना इदमन्नं सोपकरणं परिविष्टं परिवेष्यमाणं युग्मब्राह्मणतृप्तिक्षमममृतरूपेण वः स्वाहा। पञ्चमवर्गे—ॐ नान्दीमुखा पृथिव्यादिपंचमहाभूतैकादश चक्षुरादिकरणचतुर्विधभूतग्रामा इदमन्नं सोपकरणं परिविष्टं परिवेष्यमाणं युग्मब्राह्मणतृप्तिक्षमममृतरूपेण वः स्वाहा। षष्ठवर्गे—ॐ नान्दीमुखा पितृपितामहप्रपितामहा इदमन्नं सोपकरणं परिविष्टं परिवेष्यमाणं युग्मब्राह्मणतृप्तिक्षमममृतरूपेण वः स्वाहा। सप्तमवर्गे—ॐ नान्दीमुख्यो मातृपितामहीप्रपितामह्य इदमन्नं सोपकरणं परिविष्टं परिवेष्यमाणं युग्मब्राह्मणतृप्तिक्षमममृतरूपेण वः स्वाहा। अष्टमवर्गे—ॐ नान्दीमुखा आत्मपितृपितामहा इद-

छोड़ता जाय। इस प्रकार सब ब्राह्मणों को अन्न निवेदन करके उपास्य देवता को नैवेद्य लगावे। फिर सब ब्राह्मणों को एक एक आचमनी हाथ पर जल देकर

मन्नं सोपकरणं परिविष्टं परिवेष्यमाणं युग्मब्राह्मणतृप्तिक्षममसृतरूपेण वः स्वाहा। इतिसर्वेषामन्नं निवेद्य उपास्यदेवतानैवेद्यः। ततो देवपूर्वं यथाक्रमं ब्राह्मणेभ्यः सकृत्सकृदपो दत्वा यथासुखं जुषध्वमिति प्रार्थयेत्। अनंतरं ब्राह्मणा अमृतोपस्तरणमसीत्यपामशनं कृत्वा प्राणाहुतिपूर्वकं भुंजीयुः। प्राणा-

'यथासुखं जुषध्वम्' कहकर प्रार्थना करे। अनंतर ब्राह्मण 'अमृतोपस्तरणमसि' मंत्र से जल-पीकर प्राणाहुति करके भोजन करें। प्राणाहुतियों का दाँतों से स्पर्श न होना चाहिये। प्राणाहुति के बाद देवपूर्वक सब ब्राह्मणों को बायें

१ अत्र ब्राह्मणैर्भूमौ बलिहरणं न कार्यम्। महादोषश्रवणात्। वैश्वदेविकैरपि न कार्यमिति हेमाद्रिस्मृतिरत्नावलीकारादयः। वैश्वदेविकानां विहितत्वात्तैः कार्यमिति श्राद्धकाशिकाआश्मकीदयः।

हाथ पर जल दे। फिर ब्राह्मणों के भोजन आरंभ करने पर प्रणव व्याहृति-पूर्वक गायत्री का तीन बार अथवा एक बार जप करे। अनंतर पित्र्यमंत्ररहित

हुतीनामशनं दन्तैरनुपस्पृशन्कार्यम्। प्राणाहुत्यनंतरं देवपूर्वं ब्राह्मणानां सव्यहस्ते जलदानम्। अश्नत्सु ब्राह्मणेषु प्रणवव्याहृतिपूर्विकाया गायत्र्याः सकृत्त्रिर्वा जपः। अनंतरं पित्र्यमंत्रवर्जं 'कृणुष्वपाज' इत्यादीनां यथोक्तानां जपः। ततस्तृप्तान् ज्ञात्वान्नं विकीर्य। इदमन्नविकिरणं वैश्वदेविकब्राह्मणवर्जं सर्वेषामग्रत उदकमासिच्य तूष्णींकर्तव्यम्। हस्तौ पादौ प्रक्षाल्याचम्य पवित्रं

'कृणुष्वपाज०' इत्यादि मंत्रों को जपे। फिर ब्राह्मणों को तृप्त जानकर वैश्वदेविक ब्राह्मणों को छोड़कर सब ब्राह्मणों के आगे जल सिंचन करके चुपचाप अन्न

अर्थ–यहां पर ब्राह्मण पृथ्वी पर बलिहरण न करें। महादोष है। वैश्वदेविक ब्राह्मणों ने भी बलिहरण पृथ्वीपर नहीं करना चाहिये ऐसा हेमाद्रिस्मृतिरत्नावलीकार का मत है। किंतु श्राद्ध काशिका आदि में वैश्वदेविक ब्राह्मणों को बलिहरण करने को लिखा है।

विकिरण करे। बाद हाथ पैर धोकर आचमन करके पवित्र धारण करे फिर से दहिने हाथ से पवित्र निकाल कर सब ब्राह्मणों को हाथ पर एक एक आचमनी जल दे[1]। बाद प्रणवव्याहृति पूर्वक गायत्री का एक वार किंवा तीन वार जप

धृत्वा । पुनर्दक्षिणहस्तात्पवित्रं निष्कास्य वैश्वदेविकविप्रपूर्वकं सर्वेषां सकृत्सकृदपो दद्यात् । ततः सप्रणवव्याहृतिकाया गायत्र्याः सकृत्त्रिर्वा जपः। अत्र पूर्ववद्गायत्रीं जपित्वेत्युक्त्या पूर्वं सकृच्चेदत्रापि सकृत् । त्रिःकृतश्चेदत्रापि त्रिः । नात्र मधुमतीनां जपः वृद्धौ निषेधात्। वस्तुतस्तु स्वसूत्रे निषेधाभावात्सप्रणवव्याहृत्यादि

करे। पहले तीन बार जप किया हो तो तीन वार और एक बार जप किया हो तो एक बार जप करे। मधुमती का जप न करे वृद्धि में निषेध किया है। किंतु वास्तव में स्वसूत्र में निषेध नहीं किया है इस लिये प्रणवव्याहृतिपूर्वक मधुमती का

१ ॐ मधुमधुमधु। इति यजुषो जपो भवत्येवेत्युक्तं नारायणवृत्तौ दानखंडे मदनरत्ने च।

जप करना चाहिये। फिर 'ॐ सम्पन्नम्' ऐसा ब्राह्मणों से पूछे। ब्राह्मण 'सुसपन्नम्' ऐसा कहें। 'शेषमन्नं किं क्रियताम्' ऐसा सब में श्रेष्ठ ब्राह्मण को अथवा सब ब्राह्मणों को पूछे। 'इष्टैः सह भुज्यताम्' ऐसा ब्राह्मण कहें। फिर 'अमृतापि-

मधुमध्वित्यन्तः सर्वजपो भवत्येव। ॐ सम्पन्नम्। इति तृप्तिप्रश्नः। ॐ सुसम्पन्नम्। इति ब्राह्मणानां प्रतिप्रश्नः। शेषमन्नं किं क्रियताम्। इति पङ्क्तिमूर्धन्यं सर्वान्वा पृच्छति। इष्टैः सह भुज्यताम्। इति ब्राह्मणानामुत्तरम्। ततः अमृतापिधानमसी-त्यपामशनं ब्राह्मणानाम्। अथाचान्तेष्वनाचान्तेषु वा विप्रेषु पिण्डदानम्। तद्भोजनशालातो बहिःशालायामुच्छिष्टसमीपे

धानमसि' कहकर पहले दिया हुआ एक आचमनी जल ब्राह्मण पियें। अनंतर ब्राह्मणों के हाथ मुँह धोने पर अथवा बिना धोये भी पिंडदान करे। पिंडदान भोजन गृह से दूसरे घर में अथवा उच्छिष्ट के पास ही करे। दोनों पक्ष हैं।

यजुःशाखीय सूत्र में बहिः शाला का उल्लेख नहीं है इसलिये उच्छिष्ट के पास ही करे। दोनों घुटना मोड़कर पूर्वमुख अथवा उत्तरमुख बैठ पूर्वमुख बैठना हो तो सोलह ब्राह्मणों के उच्छिष्ट के पास और उत्तरमुख बैठना हो तो वैश्वदेविक

वेति पक्षद्वयमप्यस्ति। अत्र स्वसूत्रे बहिःशालानुक्तौ उच्छिष्टसमीप एव भवति। तद्यथा। पातितदक्षिणजानुः प्राङ्मुख उदङ्मुखो वा उपविश्य। प्राङ्मुखश्चेत्षोडशानामुच्छिष्टसमीपे। उदङ्मुखश्चेद्वैश्वदेविकविप्रोच्छिष्टसमीपे। तत्र स्वाग्रे गोमयेन चतुरस्रं मंडलं कृत्वा तस्मिन्प्राङ्मुखश्चेत्कुशेन 'अपहता०' इति मंत्रेण प्रतिमन्त्रं पिण्डत्रयनिधानप्रमिताः प्रागग्रा दक्षिणसंस्था अष्टौ लेखा

ब्राह्मणों के उच्छिष्ट के पास बैठना चाहिये। बाद अपने आगे गोबर से चौकोन मंडल करके पूर्वमुख हो तो दर्भ से 'ॐअपहता०' इस मंत्र से तीन पिंड रखने के लिये प्रागग्र और दक्षिणसंस्थ आठ लेखाओं को लिखे यदि उत्तरमुख हो तो

उदगग्र प्राक्संस्थ आठ लेखा लिखे ; जल का स्पर्श करे । बाद यवोदक सहित जल पात्र से लेखन क्रम से हर एक लेखा के मूल मध्य और अग्र में पार्वणक्रम से

उल्लिखेत् । उदङ्मुखश्चेदुदगग्रयः प्राक्संस्था उल्लिखेत् । ॐ अपहता असुरारक्षांसि व्वेदिषदः । अप उपस्पृश्य । ततः सयवोदकेणोदपात्रेण लेखनक्रमेण लेखायां प्रतिलेखामूलम· ध्याग्रेषु पार्वणक्रमेणावनेजनं देवतीर्थेन । तत्र प्रथमलेखायां मूले—ॐ नान्दीमुख ब्रह्मन्नवने निक्ष्व । मध्ये—ॐ नान्दीमुख विष्णो अवने निक्ष्व । अग्रे—ॐ नान्दीमुख महेश्वर अवने निक्ष्व । एवमेव द्वितीयादिलेखासु । द्वितीयलेखायां—ॐ नान्दीमुखा देवर्षयः अवने नीढ्वम् । ॐ नान्दीमुखा ब्रह्मर्षयः अवने नीढ्वम् । ॐ

अवनेजन देवतीर्थ से करे । उसमें प्रथम लेखा के मूल में 'ॐ नांदी० से निक्ष्व' । मध्य में 'ॐ नांदी० से निक्ष्व' । अग्र में 'ॐ नांदी० से निक्ष्व' ऐसे ही 'द्वितीयलेखायां०

नान्दीमुखा राजर्षयः अवने नीढ्वम् । तृतीयलेखायां ॐ नान्दीमुखा वसवः अवने नीढ्वम् । ॐ नान्दीमुखा रुद्रा अवने नीढ्वम् । ॐ नान्दीमुखा आदित्याः अवने नीढ्वम् । चतुर्थलेखायां—ॐ नान्दीमुख सनक अवने निक्ष्व । ॐ नान्दीमुख सनन्दन अवने निक्ष्व । ॐ नान्दीमुख सनातन अवने निक्ष्व । पंचमलेखायां—ॐ नान्दीमुखानि पृथिव्यादिपंचमहाभूतानि अवने नीढ्वम् । ॐ नान्दीमुखान्येकादशचक्षुरादिकरणानि अवने नीढ्वम् । ॐ नान्दीमुख चतुर्विधभूतग्राम अवने निक्ष्व । षष्ठलेखायां—ॐ नान्दीमुख पितः अवने निक्ष्व । ॐ नान्दीमुख पितामह अवने निक्ष्व । ॐ नान्दीमुख प्रपितामह अवने निक्ष्व । सप्तमलेखायां—ॐ नान्दीमुखी मातः अवने निक्ष्व । ॐ नान्दीमुखी पि-

से लेकर ॐ नांदीमुख पितामह अवने निक्ष्व' तक पढ़ता हुआ अवनेजन करे। फिर अवनेज्य लेखा में जडसहित सीधे कुश बिछावे। बाद दही, बैर

तामही अवने निक्ष्व। ॐ नान्दीमुखी प्रपितामही अवने निक्ष्व। अष्टमलेखायां—ॐ नान्दीमुख आत्मन् अवने निक्ष्व। ॐ नान्दीमुख पितः अवने निक्ष्व। ॐ नान्दीमुख पितामह अवने निक्ष्व। एवमवनेज्यलेखासु समूलऋजुकुशास्तरणम्। ततो दधिबदराक्षत-मिश्रौदनस्य बिल्वफलमात्रं पिण्डं निर्माय निर्माय दद्यादवनेजनक्र-मेण देवतीर्थेन। प्रथमलेखायां—ॐ नान्दीमुख ब्रह्मन्नेतत्तेऽन्नं स्वाहा। इदं नान्दीमुखाय ब्रह्मणे न मम। ॐ नान्दीमुख विष्णो एतत्तेऽन्नं स्वाहा। इदं नान्दीमुखाय विष्णवे न मम। ॐ नान्दीमुख महेश्वर

और अक्षत मिश्रित भात के बेलफल के बराबर पिंड बना बना कर अवनेजन

क्रम से देवतीर्थ से दे । प्रथमलेखायां 'ॐ नांदीमुख ब्रह्मन्नेतत्तेऽन्नं० से



एतत्तेऽन्नं स्वाहा। इदं नान्दीमुखाय महेश्वराय न मम । द्विती- यलेखायां-ॐ नान्दीमुखा देवर्षयः एतत्तेऽन्नं स्वाहा। ॐनान्दी- मुखेभ्यो देवर्षिभ्यो न मम । ॐ नान्दीमुखा ब्रह्मर्षयः एतत्तेऽन्नं स्वाहा। इदं नान्दीमुखेभ्यो ब्रह्मर्षिभ्यो न मम । ॐनान्दीमुखा राजर्षयः एतत्तेऽन्नं स्वाहा। इदं नान्दीमुखेभ्यो राजर्षिभ्यो न मम। तृतीयलेखायां-ॐ नान्दीमुखा वसवः एतत्तेऽन्नं स्वाहा । इदं नान्दीमुखेभ्यो वसुभ्यो न मम। ॐ नान्दीमुखा रुद्राः एतत्ते- ऽन्नं स्वाहा। इदं नान्दीमुखेभ्यो रुद्रेभ्यो न मम । ॐनान्दी- मुखा आदित्या एतत्तेऽन्नं स्वाहा। इदं नान्दीमुखेभ्यो आदि- त्येभ्यो न मम। चतुर्थलेखायाम्-ॐ नान्दीमुख सनक एतत्ते-

ऽन्नं स्वाहा । इदं नान्दीमुखाय सनकाय न मम । ॐ नान्दीमुख सनन्दन एतत्तेऽन्नं स्वाहा । इदं नान्दीमुखाय सनकाय न मम । ॐ नान्दीमुखं सनातन एतत्तेऽन्नं स्वाहा । इदं नान्दीमुखाय सनातनाय न मम । पञ्चमलेखायाम्—ॐ नान्दीमुखानि पृथिव्यादिपंचमहाभूतानि एतत्तेऽन्नं स्वाहा । इदं नान्दीमुखेभ्यो पञ्चमहाभूतेभ्यो न मम । ॐ नान्दीमुखानि एकादशचक्षुरादिकरणानि एतत्तेऽन्नं स्वाहा । इदं नान्दीमुखेभ्यो एकादशचक्षुरादिकरणेभ्यो न मम । ॐ नान्दीमुखचतुर्विधभूतग्राम एतत्तेऽन्नं स्वाहा । इदं नान्दीमुखाय चतुर्विधभूतग्रामाय न मम । षष्ठलेखायाम्—ॐ नान्दीमुख पितः एतत्तेऽन्नं स्वाहा । इदं नान्दीमुखाय पित्रे न मम । ॐ नान्दीमुख पितामह एतत्तेऽन्नं स्वाहा । इदं

नान्दीमुखाय पितामहाय न मम । ॐ नान्दीमुख प्रपितामह एत-त्तेऽन्नं स्वाहा । इदं नान्दीमुखाय प्रपितामहाय न मम । सप्तम-लेखायाम्—ॐ नान्दीमुखी मातः एतत्तेऽन्नं स्वाहा । इदं नान्दी-मुख्यै मात्रे न मम। ॐ नान्दीमुखि पितामहि एतत्तेऽन्नं स्वाहा । इदं नान्दीमुख्यै पितामह्यै न मम । ॐ नान्दीमुखि प्रपितामहि एतत्तेऽन्नं स्वाहा । इदं नान्दीमुख्यै प्रपितामह्यै न मम । अष्ट-मलेखायाम्—ॐ नान्दीमुख आत्मन् एतत्तेऽन्नं स्वाहा । ॐ ना-न्दीमुखाय आत्मने न मम । ॐ नान्दीमुख पितः एतत्तेऽन्नं स्वाहा। इदं नान्दीमुखाय पित्रे न मम । ॐ नान्दीमुख पितामह एतत्तेऽन्नं स्वाहा । इदं नान्दीमुखाय पितामहाय न मम । ततः

इदं नांदीमुखा पितामहाय न मम' तक पढ़ता जाय और पिंड देता जाय ।

फिर 'लेपभागभुजस्तृप्यंतु' कह कर पिंड के नीचे रखे हुए दर्भ के मूल में हाथ को रगड़े। फिर हाथ धोकर आचमन करके 'ॐ अत्र पितरो०' से वृषायध्वं' तक जप करके उत्तर मुंह होकर प्रदक्षिण लौट करके 'ॐ अमीमदंत० से वृषायिषत'

पिण्डाधारदर्भमूले हस्तावघर्षणम्। लेपभागभुजस्तृप्यन्तु इति। ततः करौ प्रक्षाल्याचम्य। अथ पितर इत्युक्त्वा। 'ॐ अत्र पितरो मादयध्वंयथाभाग मा वृषायद्ध्वम्' इति जपित्वा। उदङ्मुखोभूय प्रदक्षिणं परावृत्योदङ्मुखेनासून्नियम्यातमनादुपवेशनम्। तेनैव पथा परावर्तनम्। अमो मदन्तेति सस्वरं जपः। ॐ अमीमदन्त पितरो यथा भागमावृषायिषत। ततः पूर्ववदुदपात्रेण देवतीर्थेन यथाक्रमं नान्दीमुख ब्रह्मन्नवने निक्ष्वेति पूर्ववन्नामान्यु-

तक स्वरसहित जप करे। उसके बाद पूर्व की तरह जलपात्र व देवतीर्थ से क्रम से 'नांदीमुख ब्रह्मन्नवने निक्ष्व' पूर्व के तरह नामों को उच्चारण करके क्रमसे

हरेक पिंडपर प्रत्यवनेजन करे। फिर नीवी को ढीला करके 'ॐ नमोवः पितरो रसाय' इत्यादि मंत्रों को धीरे धीरे पढ़ कर छः अंजलि करे। 'ॐ नमो वः पि०

च्चार्य यथाक्रमं प्रतिपिण्डोपरि प्रत्यवनेजनम्। ततो नीवीं विस्रंस्य नमो वः पितरो रसायेत्यादिमन्त्रैर्घोरशोषवर्जं षडञ्जलिकरणम्। घोरशोषमन्त्रसम्बन्धिनावञ्जलिमंत्रप्रतिषेधात्तूष्णीमत्र भवतः। ॐ नमो वः पितरो रसाय। इति प्रथमः। द्वितीयस्तूष्णीम्। ॐ नमो वःपितरो जीवाय। इति तृतीयः। ॐ नमो वः पितरो स्वाहायै। इति चतुर्थः। पञ्चमस्तूष्णीम्। ॐ नमो वः पितरो मन्यवे। ॐ नमो वः पितरो पितरो नमो वः। इति षष्ठः। ततो ॐ गृहान्नंः पितरो दत्तमुतोवंः पितरो देष्म इति मन्त्रस्य सस्वरं जपः।

से इति षष्ठः' तक पढ़कर अंजलि दे। 'ॐ गृहान्न० से देष्म' तक इस मंत्र का स्वरसहित

जप करे। 'ॐ एतद्वः पितरो व्वासः' इस मंत्र से हरेक तीन पिंडों को सूत्र का दान दे। अथवा हर एक पिंड को ऊर्णावस्त्र किंवा यजमान अपने छाती के लोम का दान दे।

ॐ एतद्वः पितरो व्वासः आधत्त। इति मंत्रेण प्रतिपिण्डं त्रयाणां सूत्राणां दानम्। ऊर्णानां वस्त्राणां यजमानलोम्नां वा दानं प्रतिपिण्डम्। ततश्चन्दनपुष्पधूपदीपनैवेद्यफलताम्बूलद्राक्षामलकार्द्रकमूलयवादिभिः पिण्डपूजनम्। पिण्डान्सम्पूज्य। कुशयवजलान्यादाय नान्दीमुखेभ्यो ब्रह्मादिभ्य इमानि गन्धपुष्पधूपदीपनैवेद्यद्राक्षामलकार्द्रकमूलयवपूगीफलताम्बूलानि स्वाहा। ततोऽञ्जलिं बध्वा मयाचरिते पिण्डार्चनविधौ यन्न्यूनातिरिक्तं तत्प-

फिर चंदन पुष्प धूप दीप नैवेद्य फल तांबूल द्राक्षा आमलक यवादि से पिंड का पूजन करके हाथ में कुश यव जल लेकर 'नांदो० से स्वाहा' तक पढ कर जल छोड़े।

हाथ जोड़ कर 'मया० से मस्तु' तक पढ़ कर प्रश्न करे। ब्राह्मण 'अस्तु परिपूर्ण' कहें। यहाँ पर ब्राह्मणों को आचमन कराके उठने की आज्ञा दे। ब्राह्मणों को हाथ मुँह धोने पर जल, फूल, अक्षत, और अक्षय्योदक दे। उसमें पहिले वैश्वदे-

रिपूर्णमस्तु। इति प्रश्नः। अस्तु परिपूर्णम्। इति प्रतिप्रश्नः। अत्र वा ब्राह्मणानाचमय्य वाग्विसर्गः। आचान्तेषूदकं पुष्पाण्यक्षतानक्षय्योदकं च दद्यात्। पूर्वं वैश्वदेविकविप्रयोः उदङ्मुखेन। ॐ शिवा आपः सन्तु। इति जलम्। सन्तु शिवा आपः। इति प्रतिवचनम्। ॐ सौमनस्यमस्तु। इति पुष्पाणि। ॐ अस्तु सौमनस्यम्। इति प्रतिवचनम्। ॐ अक्षतञ्चारिष्टञ्चास्तु। इत्यक्षताम्। ॐ अस्त्वक्षतमरिष्टञ्च इति प्रतिवचनम्। एतावदेव

विक ब्राह्मणों को उत्तरमुख होकर 'ॐ शिवा० से इति प्रतिवचनम्' तक पढ़ता हुआ जल पुष्प और अक्षत दे और ब्राह्मण प्रतिवचन कहें। वैश्वदेविक ब्राह्मणों

को इतना ही दे, अक्षय्योदक न दे। फिर पूर्वमुख होकर दहिना घुटना टेक कर दैवादि अष्टश्राद्धसंबंधि सोलह ब्राह्मणों को जल पुष्प और अक्षत पहिले की

वैश्वदेविकविप्रकरे। नाक्षय्योदकदानम्। ततः प्राङ्मुखेन पातितदक्षिणजानुना दैवाद्यष्टश्राद्धसम्बन्धिषोडशानां क्रमेणोदकपुष्पाक्षताम् पूर्वोक्तेनैव विधिना दद्यात्। अक्षय्योदकमधिकम्। तच्चेत्थम्। कुशयवजलान्यादाय क्रमेण द्वयोर्द्वयोर्हस्ते अर्घदानन्यायेन दद्यात्। न पृथक् पृथक् देवतोहः। प्रकृतौ वृद्धिश्राद्धे नान्दीमुखाः पितरः[1] प्रीयन्तामित्यक्षय्यस्थान इत्यत्र एकपदेनैव सर्वप्रकाश-

तरह दे और ब्राह्मण प्रतिवचन कहें। इन सोलह ब्राह्मणों को अक्षय्योदक दान दे। उसका क्रम इस प्रकार है। फिर कुश यव जल लेकर क्रम से दो दो ब्राह्मणों के हाथ में अर्घदान की तरह दे। देवता का पृथक् पृथक् उच्चारण न करे। प्रकृत

---

१ प्रकृत वृद्धिश्राद्ध में पितरः, ऋषयः ऐसा एक पद कहने से काम होता है।

नसंभवात्। तत्र आद्ये-ॐ नान्दीमुखा देवाः प्रीयन्ताम् । द्वितीये-ॐ नान्दीमुखा ऋषयः प्रीयन्ताम् । तृतीये-ॐ नान्दीमुखा दिव्याः प्रीयन्ताम् । चतुर्थे-ॐ नान्दीमुखा मनुष्याः प्रीयन्ताम्। पञ्चमे-ॐ नान्दीमुखानि भूतानि प्रीयन्ताम् । षष्ठे-ॐ नान्दीमुखाः पितरः प्रीयन्ताम्। सप्तमे-ॐ नान्दीमुख्यो मातरः प्रीयन्ताम् । अष्टमे-ॐ नान्दीमुखा आत्मानः प्रीयन्ताम् । इत्यक्षय्योदकदानम्।अथाशिषः प्रार्थनम् । अघोराः पितरः सन्तु । इति कृताञ्जलिना यजमानेन ब्राह्मणान्प्रति प्रश्नः । सन्त्वघोराः पितरः । इति प्रतिप्रश्नः । गोत्रन्नो वर्द्धताम् । इति प्रश्नः। वर्द्धताम् । इति प्रतिप्रश्नः । ॐ दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च ।

वृद्धिश्राद्ध में 'ॐ नांदीमुखा० से आत्मानः प्रीयंतां' तक पढ़े और अक्षय्योदक दान

दे। 'अघोराः० से प्रतिवचनम्' तक पढ़कर यजमान आशीर्वाद की प्रार्थना करे और ब्राह्मण प्रतिवचन कहें। इस प्रकार आशीर्वाद ग्रहण करने के अनंतर औंधे पात्र पर रखे हुए स्वाहावाचनीय कुशों को लेकर और अर्घ पवित्रों को भी

श्रद्धा च नोमाव्यगमद्बहुदेयञ्चनोऽस्तु। इमं मन्त्रं यजमान उदाहरेत्। अस्तु। इति प्रतिवचनम्। एवमाशिषां ग्रहणं कर्कोपाध्याया आहुः। अथ न्युब्जपात्रोपरिस्थापितस्वाहावाचनीयकुशान् गृहीत्वा। मतान्तरेणार्धपवित्राण्यपि गृहीत्वा आद्यपार्वणपिण्डपङ्क्तेरुत्तरतः प्रागग्राणां तेषां स्तरणम्। ॐ नान्दीमुखान्देवानृषीन्दिव्यान्मनुष्यान्भूतानि पितॄन्मातॄरात्मनो वाचयिष्ये। इति पृच्छति पङ्-

लेकर आद्य पार्वण पिंडपंक्ति के उत्तर से पूर्वाग्र कुशों को बिछावे। 'ॐ नांदी० से वाचयिष्ये' तक पढ़ कर पंक्तिश्रेष्ठ ब्राह्मण को अथवा सब ब्राह्मणों को

पूछे। 'ॐ वाच्यताम्' कह कर ब्राह्मण आज्ञा दे। फिर 'ॐ नांदीमुखा०' से प्रीयताम्' तक मंत्रोच्चार करे। फिर 'ॐ प्रीयताम्' ऐसा ब्राह्मणों के कहने

क्तिमूर्धन्यं सर्वान्वा। ॐ वाच्यताम्। इति तैरनुज्ञातः। ॐ नान्दीमुखा ब्रह्माणो विष्णवो महेश्वरा देवर्षयो ब्रह्मर्षयो क्षत्रर्षयो वसवो रुद्रा आदित्याः सनकाः सनंदनाः सनातनाः पृथिव्यादिपञ्चमहाभूतान्येकादशचक्षुरादिकरणानि चतुर्विधा भूतग्रामाः पितरः पितामहाः प्रपितामहा मातरः पितामह्यः प्रपितामह्य आत्मानः पितरः पितामहाश्च प्रीयन्ताम्। इति मन्त्रं उदाहरेत्। ततः ॐ प्रीयताम्। इति विप्रैरुच्यमाने। ॐ ऊर्ज्जं वहन्तीरमृतंघृतम्पयः कीलालं परिस्रुतम्। स्वाहास्थतर्पयत मे पितॄन्। इति मन्त्रेणास्तृ-



पर 'ॐ ऊर्जं० से पितृन्' इस मंत्र से बिछाये हुए कुशों पर अवनेजन जल

छोड़े। औंधे अर्घपात्र को सीधा करके 'कृतैत० से संप्रददे' तक कह कर सबों को दक्षिणा देकर पिंडों को नमस्कार करके पिंडोद्धरण करे।

तकुशेष्ववनेजनावष्टानामपान्निषेकः। न्युब्जमर्घपात्रमुत्तानं कृत्वा दक्षिणां दद्यात्। कृतैतच्छ्राद्धप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकार्द्रकमूलयवनिष्क्रयभूतां दक्षिणां तुभ्यमहं संप्रददे। एवं सर्वेभ्यो दत्वा। पिण्डान्नमस्कृत्य। पिण्डोद्धरणम्। स्थाल्यामवधार्य। अवजिघ्रति। विश्वेदेवाः प्रीयन्तामिति ब्रूतम्। इति वैश्वदेविकौ वाचयित्वा। तावपि तथैव वदेताम्। ॐ विश्वेदेवाः प्रीयन्ताम्। इति। ततो ब्राह्मणान् प्रार्थयेत्। अद्य मे सफलं जन्म भवत्पादाब्जदर्शनात्। अद्य मे सफलोच्छित्तिर्दुस्तराद्भवसा-

पिंडों को स्थाली में रखकर सूँघे। 'विश्वेदेवाः प्रीयंताम्' यजमान कहे बाद में ब्राह्मण भी कहें। फिर 'अद्यमे० से महेथ' तक पढ़ कर ब्राह्मण को

प्रार्थना करे फिर यव कुश जल लेकर 'मया करिष्य० से पूर्णोऽस्तु' तक पढ़ कर
गरात् ॥ पत्रशाकादिदानेन क्लेशिता यूयमीदृशाः । तत्क्लेशजातं
चित्तात्तु विस्मृत्य क्षन्तुमर्हथ ॥ इति ततो यवकुशजलान्यादाय–
मया करिष्यमाणसन्यासाङ्गभूतान्येतानि दैवादीनि सदैवानि पार्व-
णविधिनाष्टौ श्राद्धानि कृतानि तन्मध्ये न्यूनातिरिक्तो यो विधिः स
ब्राह्मणवचनाच्छ्रीमद्विश्वेश्वरप्रसादात्परिपूर्णोऽस्तु । इति सकुशायां
भूमौ जलमुत्सृजेत् । ॐ अस्तु परिपूर्णः । इति ब्राह्मणा वदेयुः ।
ततो ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् । ब्रह्मैव तेन गन्तव्यं
ब्रह्मकर्मसमाधिना ॥ हरिर्दाता हरिर्भोक्ता हरिरन्नं प्रजापतिः ।
हरिर्विप्रशरीरस्तु भुङ्क्ते भोजयते हरिः ॥ चतुर्भिश्च चतुर्भिश्च द्वाभ्यां
पंचभिरेव च । हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥
कुशसहित भूमि में जल छोड़े । ब्राह्मण 'ॐ अस्तु परिपूर्णः' कहें । फिर 'ब्रह्मार्पणं०

से प्रसीदतु। ॐ तत्सद्ब्रह्मार्पणमस्तु' तक कहकर जल छोड़े। 'यस्यस्मृत्या० से स्यादिति स्मृतिः' तक कहकर बारह बार विष्णु का स्मरण करके फिर पहले दैवादि

ॐ तत्सद्ब्रह्मार्पणमस्तु। इति जलमुत्सृज्य। यस्य स्मृत्या च नामोक्त्या श्राद्धयज्ञक्रियादिषु। न्यूनं संपूर्णतां याति सद्यो-वन्दे तमच्युतम्॥ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्। स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति स्मृतिः॥ इत्युक्त्वा द्वादशवारं विष्णुं स्मृत्वा। अनन्तरमादौ दैवादीन् षोडशान्य-थाक्रमं कुशाग्रेण संस्पृशन् 'वाजेवाजेवतवाजिनोनो धनेषुविप्राऽअ-मृताऽऋतज्ञाः॥ अस्यमध्वः पिबतमादयध्वन्तृप्तायात पथिभि-र्देवयानैः॥ इति मंत्रेण प्रतिविप्रं विसृज्य। अनेनैव

सोलह ब्राह्मणों को क्रम से कुशाग्र से स्पर्श कर 'वाजेवाजेवत०' इस मंत्र से सब

विप्रों का विसर्जन करे। फिर ब्राह्मणों का आगे करके 'आमावाजस्य०' मंत्र कहकर सीमांत गमन करे। फिर प्रदक्षिणा कर नमस्कार कर बैठ करके

मंत्रेण कुशाग्रेणैव संस्पृशन् वैश्वदेविकविप्रयोर्विसर्जनम्। ततो ब्राह्मणानग्रतः कृत्वा अमावाजस्येति सीमान्तमनुगमनम्। ॐ आमावाजस्य प्प्रसवो जगम्म्यादेमेद्यावापृथिवी विश्वरूपे आमागन्ताम्पितरामातरा चामासोमोऽअमृतत्वेन गम्म्यात्। इति। सकृदेव मन्त्रः। ततः प्रदक्षिणीकृत्य नमस्कृत्योपविश्य प्रार्थयेत्। संन्यासार्थं मया श्राद्धे कृतमेतद्द्विजोत्तमाः। अनुज्ञां प्राप्य युष्माकं सिद्धिं प्राप्स्यामि शाश्वतीम्। गर्भजन्मजराभीतः सन्तापत्रयतस्तथा। गुहां प्रवेष्टुमिच्छामि परं पदमनामयम्। इति प्रार्थ्य अत्र वा ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्। ब्रह्मैव

'संन्यासार्थं० से मनामयं' तक पढ़कर प्रार्थना करके 'ब्रह्मार्पणं०' कहकर

ब्रह्मसमर्पण करे और विष्णुस्मरण करे । इति संन्यासपूर्वांगविहितसपिण्डके दैवादिपावर्णश्राद्धपद्धतेः भाषाटीका समाप्ता ।

फिर गौ आदिकों को बलि देकर इष्टों के साथ भोजन करे। यहाँ पर

तेन गन्तव्यं ब्रह्मकर्म समाधिना ॥ हरिर्दाता हरिर्भोक्ता हरिरन्नं प्रजापतिः। हरिर्विप्रशरीरस्तु भुङ्क्ते भोजयते हरिः॥ इति ब्रह्मसमर्पणं विष्णुस्मरणं च। इति संन्यासपूर्वाङ्गविहितसपिंडके दैवादिपार्वणश्राद्धपद्धतिः समाप्ता।

अनंतरं गवादिभ्यो बलिं दत्वा इष्टैः सह भुंजीत। अत्र आत्मश्राद्धे आत्मांतरात्मपरमात्मेति पार्वणं कैश्चिदुक्तं तदपुत्रसंन्यासगृहीतपरं। तत्र नान्दीमुखानां आत्मांतरात्मपरमात्मनां

आत्मश्राद्ध में संन्यासग्रहण करनेवाले को पुत्र न हो तो आत्मा-अन्तरात्मा-परमात्मा इस क्रम से पार्वण करना चाहिये ऐसा किसी का मत है। वहाँ पर

'नांदीमुखानां आत्मांतरात्मपरमात्मनां स्थाने' ऐसा उच्चारण करना चाहिये।

स्थाने इत्यूहः। आवाहने। नान्दीमुखानात्मांतरात्मपरमात्मन आवाहयिष्ये। सहस्रशीर्षेत्यावाहनम्। तिलोसीति मंत्रे आत्मनो लोकानिति। अर्घदाने। आत्मन्नेषः तेऽर्घः। अन्तरात्मन्नेष तेऽर्घः। परमात्मन्नेष तेऽर्घः। इति। गंधादिदाने। नान्दीमुखा आत्मान्तरात्मपरमात्मानः इदं गन्धं वः स्वाहा। अन्नसङ्कल्पे। नान्दीमुखा आत्मान्तरात्मपरमात्मानः इदमन्नं सो० वः स्वाहा। इति। अवनेजने। नान्दीमुख आत्मन् अवने निक्ष्व। नान्दीमुख अन्तरात्मन् अवने निक्ष्व। नान्दीमुख परमात्मन् अवने निक्ष्व। इति। पिण्डदाने। नान्दीमुख आत्मन्नेतत्तेऽन्नं स्वाहा। इदं नान्दीमुखायात्मने न मम। नान्दीमुख अन्तरात्मन्नेतत्तेऽन्नं स्वाहा।

'आवाहने से लेकर आत्मानः प्रीयताम्' तक पढ़ते हुए कर्म कराता जाय और सब पहिले की तरह। इस प्रकार आठ श्राद्धों को करके उसीदिन अथवा दूसरे दिन ब्रह्मरात्रि के अनुरोध से पांच किंवा सात शिखा के केशा कटवाकर

इदं नान्दीमुखायान्तरात्मने न मम। नान्दीमुख परमात्मन्नेतत्तेऽन्नं स्वाहा। इदं नान्दीमुखाय परमात्मने न मम। पूर्ववदवनेजनम्। अक्षय्योदके। नान्दीमुखा आत्मानः प्रीयन्ताम्। इति। अन्यत्समानम्।

एवमष्टौ श्राद्धानि कृत्वा श्राद्धोत्तरं तद्दिने द्वितीयदिने वा ब्रह्मरात्र्यानुरोधेन पंच सप्त वा शिखाकेशा वापयित्वा कक्षोपस्थवर्जं केशश्मश्रुनखानि वापयित्वा स्नात्वा कौपीनाच्छादनादिहोमद्रव्यं कर्माङ्गदक्षिणाद्रव्यञ्च स्वसमीपे संस्थाप्य अन्यद्धना-

बगल और गुह्य को छोड़कर सब केशश्मश्रु नखों को कटवा कर स्नान करके कौपीन, आच्छादन, होमद्रव्य, कर्माङ्गदक्षिणा के वास्ते द्रव्य अपने पास रखकर

बाकी धनादिक को ब्राह्मणों को और पुत्रों को देकर कौपीनादिक को गेरू से रंग करके माथा, भौं अथवा ललाट तक ऊँचा, जड़ समेत, अंगुल बराबर

दिकं विप्रादिभ्यो पुत्रादिभ्यश्च दत्वां कौपीनादिकं गैरिकरंजितं कृत्वा वैणवं दण्डं शिरोभ्रूललाटान्यतमप्रमाणं समूलमङ्गुल-स्थूलं विप्रेणानीतं एकादशनवचतुःसप्तान्यतमपर्वकं पर्वग्रन्थियुतं संपाद्य शंखोदकेनाष्टोत्तरशतवारं 'ॐ' इति प्रणवेन अभिषेकं कृत्वा ततः पुरुषसूक्तेन च अभिषेकं कुर्यात् ।

हरिः ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ स भूमिꣳ सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुष एवेदꣳ सर्वं यद्भूतं यच्च भाव्यम् ॥ उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥

मोटा, ब्राह्मण ने लाया हुआ, ग्यारह, नौ, चार अथवा सात पर्व वाला, पर्व-ग्रन्थियों से युक्त बांस के दण्ड को शंख के जल से एक सौ आठ बार प्रणव

एतावानस्यमहिमातो ज्ज्यायाँश्श्चपूरुषः ॥ पादोस्यविश्श्वा भूतानि त्रिपादस्यामृतन्दिवि ॥ ३ ॥ त्रिपादूर्द्ध्व ऽउदैत्पुरुषः पादोस्येहाभवत्पुनः ॥ ततोव्विष्ष्वङ्व्यक्क्रामत्साशनानशनेऽअभि ॥ ४ ॥ ततोव्विराडजायतव्विराजो अधिपूरुषः ॥ सजातोऽअत्यरिच्च्यतपश्चाद्भूमिमथोपरः ॥५॥ तस्माद्यज्ञात्सर्व्वहुतः सम्भृतम्पृषदाज्ज्यम् ॥ पशूँस्ताँश्चक्क्रेव्वायव्व्यानारण्ण्याग्ग्राम्म्याश्चये ॥ ६ ॥ तस्माद्यज्ञात्सर्व्वहुतऽऋचः सामानिजज्ञिरे ॥ छन्दाᳬसिजज्ञिरे तस्म्माद्यजुस्तस्म्मादजायत ॥७॥ तस्म्मादश्श्वाऽअजायन्तयेके चोभयादतः ॥ गावोहजज्ञिरे तस्म्मात्तस्म्माज्जाताऽअजावयः ॥ ८ ॥ तंय्यज्ञम्बर्हिषिप्प्रौ-

क्षन्पुरुषञ्ज्ञातमग्ग्रतः ॥ तेनदेवा ऽअयजन्तसाद्ध्या ऽऋषयश्चये
॥ ९ ॥ यत्पुरुषंव्यदधुः कतिधाव्यकल्पयन् ॥ मुखङ्किमस्यासीत्किं-
म्बाहूकिमूरूपादाऽउच्च्येते ॥ १० ॥ ब्राह्मणोस्यमुखमासीद्बाहूरा-
जन्न्यः कृतः ॥ ऊरूतदस्ययद्वैश्यः पद्भ्याँशूद्रो ऽअजायत ॥११॥
चन्द्रमामनसोजातश्चक्षोः सूर्य्योऽअजायत ॥ श्रोत्राद्वायुश्चप्राण-
श्चमुखादग्निरजायत ॥ २ ॥ नाब्भ्याऽआसीदन्तरिक्षँशीर्ष्णो
द्यौः समवर्त्तत ॥ पद्भ्याम्भूमिर्दिशःश्रोत्रात्तथालोकाँ२ऽअकल्पयन्
॥ १३ ॥ यत्पुरुषेणहविषादेवायज्ञमतन्न्वत ॥ वसन्तोस्यासीदा-
ज्ज्यङ्ग्रीष्मऽइध्मश्शरद्धविः ॥ १४ ॥ सप्तास्यासन्परिधयस्त्रिः

सप्तसमिधं÷कृताः ॥ देवायद्यज्ञन्तंन्वानाऽअबंध्नन्पुरुंषम्पशुम् ॥ १५ ॥ यज्ञेनंयज्ञमंयजन्तदेवास्तानि धर्म्माणिप्रथमान्यांसन् ॥ तेहनाकंम्महिमानं÷सचन्तयत्रपूर्वेसाद्ध्याः सन्तिदेवाः ॥ १६ ॥

इति पुरुषसूक्तेन अभिषेकं कृत्वा—केशवादिचतुर्विंशतिनामभिश्चाभिषेकं कुर्यात् । ॐ केशवाय नमः । ॐ नारायणाय नमः । ॐ माधवाय नमः । ॐ गोविन्दाय नमः । ॐ विष्णवे नमः । ॐ मधुसूदनाय नमः । ॐ त्रिविक्रमाय नमः । ॐ वामनाय नमः । ॐ श्रीधराय नमः । ॐ हृषीकेशाय नमः । ॐ पद्मनाभाय नमः । ॐ दामोदराय नमः । ॐ संकर्षणाय नमः ।

से, पुरुषसूक्त से और केशवादि चौबीस नामों से अभिषेक करके रखे । कर्म-

डलु, कौपीन आदि पांच किंवा दण्ड आदि दस किंवा दण्ड आदि पाँच चीजों

ॐ वासुदेवाय नमः। ॐ प्रद्युम्नाय नमः। ॐ अनिरुद्धाय नमः। ॐ पुरुषोत्तमाय नमः। ॐ अधोक्षजाय नमः। ॐ नारसिंहाय नमः। ॐ अच्युताय नमः। ॐ जनार्दनाय नमः। ॐ उपेन्द्राय नमः। ॐ हरये नमः। ॐ श्रीकृष्णाय नमः। इति केशवादिचतुर्विंशतिनामभिश्चाभिषिच्य स्थापयेत्। कमण्डलु-कौपीनाच्छादनकंथापादुकाश्च इति पंच। दण्डं जलपवित्रं शिक्यं पात्रं कमण्डलुं आसनं कौपीनं आच्छादनं कन्था पादुका इति दश वा। दण्डं जलपवित्रं च शिक्यं पात्रं कमण्डलुम्। इति पञ्च वा। इत्युपकल्प्य उदगयनाद्युक्तकाल एकादश्यां द्वादश्यां

को जुटाकर उत्तरायणादि कहे हुए समय में एकादशी वा द्वादशी को आसन

पर बैठकर आचमन प्राणायाम करके हाथ में कुश ले पवित्री पहिन कुश यव जल लेकर देशकाल का उच्चार करके 'अमुकगोत्रो० से लेकर परमहंसाख्य संन्यास

वा स्वासने उपविश्याचम्य प्राणानायम्य कुशोपग्रहः पवित्र-पाणिः कुशयवजलान्यादाय देशकालौ संकीर्त्य अमुकगोत्रोऽमुकशर्मा अशेषदुःखनिवृत्तिनिरतिशयानन्दप्राप्तिपरमपुरुषार्थ-सिद्धये परमहंसाख्यसंन्यासग्रहणं करिष्ये। तदंगतया स्वस्ति-वाचनमातृपूजावसोर्द्धारायुष्यजपाभ्युदयिकश्राद्धानि करिष्ये । तत्रादौ निर्विघ्नपरिसमाप्त्यर्थं गणेशाम्बिकयोः पूजनं करिष्ये। इति संकल्प्यैतानि[1] कृत्वा। पुनराचम्य प्राणानायम्य ब्रह्मा-

ग्रहणं करिष्ये' तक पढ़कर संकल्प छोड़े। 'तदंगतया० से पूजनं करिष्ये' तक पढ़कर संकल्प करके स्वस्तिवाचनादि कर्मों को करे। बाद आचमन प्राणायाम

१. स्वस्तिवाचनमातृपूजावसोर्द्धारायुष्यजपाभ्युदयिकश्राद्धानि गणेशाम्बिकयोः पूजनं च।

करके ब्रह्मांजलि कर 'ॐ ब्रह्मणे नमः से शंय्योरभिस्रवन्तुनः' तक जप करके तीन 
अलिं विधाय जपेत् ॐ ब्रह्मणे नमः। ॐ विष्णवे नमः। ॐ
रुद्राय नमः। ॐ सूर्याय नमः। ॐ सोमाय नमः। ॐ आत्मने
नमः। ॐ अंतरात्मने नमः। ॐ परमात्मने नमः। ॐ अग्नि-
मीळे पुरोहितं यज्ञस्यं देवमृत्विजम्। होतारं रत्नधातमम् ॥
ॐ इषेत्त्वोर्ज्जेत्त्वांव्वायवंस्त्थदेवोवंः सविताप्प्रार्थयतुश्श्रेष्ठतमायकर्म्म-
णऽआप्प्यायद्ध्व मग्घ्न्याऽइन्द्राय भागम्प्रजावंतीरनमीवाऽअंयक्ष्मा-
मावंस्तेनईशतमाघशंꣳसोद्ध्रुवाऽअस्मिन्गोपतौस्यात्बह्वीर्य्यजंमा-
नस्यपशून्पाहि ॥ ॐ अग्न आयाहि वीतये गृणानो हव्य 
दातये। निहोता सत्सि बर्हिषी ॥ ॐ शन्नोदेवीरभिष्टय ऽ आपो

मुट्ठी सत्तू 'ॐ आत्मने स्वाहा० से ॐ प्रजापतये स्वाहा' तक पढ़कर तीन बार प्राशन करके फिर दूध दही मिला घी अथवा खाली जल 'ॐ त्रिवृदसि० से

भवन्तु पीतये । शय्योरभिस्रवन्तु नः ॥ इति जपित्वा सक्तु-मुष्टित्रयं प्रणवेन त्रिः प्राश्य नाभिमालभेते। ॐ आत्मने स्वाहा । ॐ अन्तरात्मने स्वाहा। ॐ परमात्मने स्वाहा । ॐ प्रजा-पतये स्वाहा । इति मन्त्रैः । ततः पयोदधिमिश्रमाज्यं केवलं जलं वा । ॐ वृदसि । इति प्रथमम् । ॐ प्रवृदसि । इति द्वितीयम् । ॐ विवृदसि । इति तृतीयं प्राश्य । आपः पुनन्तु पृथिवीं पृथ्वीपूता पुनातु माम् । पुनन्तु ब्रह्मणस्पतिर्ब्रह्म-पूता पुनातु माम् ॥ यदुच्छिष्टमभोज्यञ्च यद्वा दुश्चरितं मम । सर्वं पुनन्तु मामापो सता च प्रतिग्रह ँ स्वाहा । इति जलं प्राश्य

प्रतिग्रह ँ स्वाहा' तक पढ़कर तीन बार प्राशन करे। फिर आचमन

करके 'उपवासं करिष्ये' कहकर संकल्प करे। कुछ भी न खाय। अशक्त हो तो दुग्ध खाय। फिर सावित्री प्रवेश करे। 'ॐ भूः सावित्रीं० से ॐ

आचम्य। उपवासं करिष्ये। इति संकल्पयेत्। किमपि न प्राश्नीयात्। अशक्तश्चेद्दुग्धादिनात्मानं गोपायेत्। ततः सावित्रीप्रवेशं कुर्यात्। तद्यथा—ॐ भूः सावित्रीं प्रविशामि। ॐ तत्सवितुर्वरेण्यं। ॐ भुवः सावित्रीं प्रविशामि। ॐ भर्गो देवस्य धीमहि। ॐ स्वः सावित्रीं प्रविशामि। ॐ धियोयो नः प्रचोदयात्। ॐ भूर्भुवः स्वः सावित्रीं प्रविशामि। ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियोयो नः प्रचोदयात्। ॐ परोरजसे सावदो३म्। इति जपित्वा व्याहृतीः प्रणवे प्रवेशयेत्। ॐ भूः प्रणवे प्रवि-

परोरजसे सावदो३म्' तक जप करके 'ॐ भूः० से ॐ भूर्भुवः स्वः प्रणवे प्रविशामि'

तक पढ़कर अपने को प्रणवस्वरूप ध्यान कर ब्रह्मान्वाधान करे।
विधि—अपने आगे एक हाथ लंबा व एक हाथ चौड़ा चार अंगुल ऊँचा स्थंडिल बना

शामि। ॐ भुवः प्रणवे प्रविशामि। ॐ स्वः प्रणवे प्रविशामि। ॐ भूर्भुवः स्वः प्रणवे प्रविशामि। इति प्रणवे प्रवेश्य प्रणवस्वरूपमात्मानं ध्यात्वा ब्रह्मान्वाधानं कुर्यात्।

तत्र विधिः। स्वपुरतो हस्तमात्रं चतुरङ्गलोच्चं स्थण्डिलं

विधाय अस्तमयात्प्राक् आचम्य प्राणानायम्य मासपक्षाद्युल्लिख्य सन्यासं कर्तुं ब्रह्मान्वाधानं करिष्ये। तदर्थं कातीयपरिशिष्टकल्पोक्तविधिना पञ्चसंस्कारपूर्वकमग्निं स्थापयिष्ये। दर्भैः परिसमुह्य।

कर सूर्य्यास्त से पहले आचमन प्राणायाम करके मासपक्षादि का उच्चार करके 'संन्यासं०से करिष्ये' तक पढ़कर ब्रह्मान्वाधान का संकल्प करे। कातीयपरिशिष्टकल्पोक्तविधि से पंचसंस्कारपूर्वक अग्नि की स्थापना करे

दर्भों से परिसमूहन करे, गोबर से लीपे, स्रुवा से उल्लेखन करे, अनामिका व

गोमयेनोपलिप्य । स्रुवेणोल्लिख्य । अनामिकाङ्गुष्ठाभ्यामुद्धृत्य उदकेनाभ्युक्ष्य । ॐ अन्न्वग्ग्निरुषसामग्ग्रंमक्ख्यदन्न्वहांनिप्प्रथमोजातवेदा? । अनुसूर्य्यस्य पुरुत्रा चं रश्म्मीननुद्यावां पृथिव्वीऽआततंथ ॥ इति मन्त्रेण ग्रामाग्निं श्रोत्रियागारादाहृत्य । ॐ पृष्ट्टोदिविपृष्ट्टोऽअग्नि?पृथिव्व्यांपृष्ट्टोविश्श्वाऽओषधीराविवेश। व्वैश्श्वानर॑ᳬसहंसापृष्ट्टोऽअग्निᳬसनोदिवासरिषस्प्पांतुनक्तंम् ॥ इति मन्त्रेण अग्निं स्थण्डिले अधिष्ठाप्य । अग्नाविन्धनं प्रक्षिप्य ।

अँगूठे से उद्धरण करके जल छिड़के, ॐ अन्वग्नि॰' इस मंत्र से अग्नि होत्री के घर से अग्नि लाकर 'ॐपृष्ठो दिवि॰' इस मंत्र से स्थंडिलपर अग्नि रखे, फिर अग्निपर इन्धन

रख कर 'ताꣳसवितु० से आसुव' तक इन तीन सावित्र मंत्रों से अग्नि को प्रज्वलित

ॐ ताꣳसवितुर्व्वरेण्यस्य चित्रामाहं व्वृणे सुमतीं विश्वजंन्न्याम्। यामस्यकण्ण्वोऽअदुंहत्प्रपीनाꣳसहस्रधाराम्पयसामहीङ्गाम् ॥ ॐ

ॐ तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि। धियोयो नः प्रचोदयात् ॥ विश्वानिदेवसवितर्दुरितानि परासुव। यद्भद्रन्तन्नऽआसुव ॥

इति त्रिभिः सावित्रैः मन्त्रैः प्रज्वाल्य। इत्यग्निस्थापनं कृत्वा-ततः प्रज्वालितमग्निं-चत्वारि श्रृंगा गौतमो वामदेवोऽग्निस्त्रिष्टुप्-अग्निमूर्तिध्याने विनियोगः। ॐ चत्वारि श्रृङ्गा-त्रयो अस्य पादा द्वे शीर्षे सप्तहस्ता सो अस्य। त्रिधा बद्धो

करे। अग्नि से ज्वाला निकलने लगे तब 'चत्वारिश्रृंगा० से वरदो भव' इन मंत्रों

वृषभो रोरवीति महो देवो मर्त्यां आविवेश ॥ सप्तहस्त-
श्चतुःशृङ्गः सप्तजिह्वो द्विशीर्षकः । त्रिपात्प्रसन्नवदनः सुखासीनः
शुचिस्मितः ॥ स्वाहां तु दक्षिणे पार्श्वे देवीं वामे स्वधां
तथा । बिभ्रद्दक्षिणहस्तैस्तु शक्तिमन्नं स्रुचं स्रुवम् । तोमरं
व्यजनं वामैर्घृतपात्रं च धारयन् ॥ मेषारूढो जटाबद्धो गौरवर्णो
महौजसः । धूम्रध्वजो लोहिताक्षः सप्तार्चिः सर्वकामदः ॥ आ-
त्माभिमुखमासीन एवंरूपो हुताशनः ॥ अग्ने वैश्वानर शांडिल्य
गोत्र प्राङ्मुखो देव मम संमुखो वरदो भव । इति ध्यात्वा
मनोजूतिर्ज्जुषतामाज्ज्यस्य बृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टंय्यज्ञꣳ
समिमन्दधातु । विश्श्वेदेवासऽइहमादयन्तामोꣳम्प्रतिष्ठ ॥ इति
से ध्यान करके 'मनोजू०' इस मंत्र को पढ़कर 'भो अग्ने सुप्रतिष्ठितो भव' कहकर

अग्निस्थापन करके ब्रह्मान्वाधान करे। पूर्णाहुती के तरह आज्यसंस्कार करे। 'निरूप्याज्यं० से न मम' तक पढ़कर क्रिया करते हुए ब्रह्मान्वाधान करे। फिर

मन्त्रं पठित्वा भो अग्ने सुप्रतिष्ठितो भव इति प्रतिष्ठाप्य ब्रह्मान्वाधानं कुर्यात्। तत्र पूर्णाहुतिवदाज्यसंस्कारः। निरूप्याज्यम्। अधिश्रित्य स्रुक्स्रुवे संमृज्य उद्वास्य उत्पूय अवेक्ष्य चतुर्गृहीतं गृहीत्वा जुहुयात्। ॐ स्वाहा। इदं परमात्मने न मम। इसि ब्रह्मान्वाधानम्। ततः सायंसन्ध्यावन्दनादि कृत्वा उत्तरेणाग्निं कुशानास्तीर्य दण्डादीनि दश यष्ट्यादीनि पञ्च वा द्वन्द्वश आसाद्य दक्षिणेनाग्निं कुशेषु कृष्णाजिनमास्तीर्य तस्मिन्नुदङ्मुख

सायंसंध्यावंदनादि करके उत्तर से अग्नि को कुश बिछा कर दण्डादि दस अथवा यष्ट्यादि पांच अथवा दोनों को लेकर कुशों पर कृष्णाजिन बिछाकर उस कृष्णाजिन पर उत्तर मुँह बैठ करके प्रणवस्वरूप अग्नि का ध्यान करता

वराहुति
गृह्याग्नि
पुरुषसूक्त
याज्ञं
कृष्णसूक्त
याग
श्रीयाग
गायत्री
याज्ञं
कृत्वा

माध्यं०

॥३९॥

हुआ अग्नि के पास जागरण करे। फिर सबेरे स्नान करके प्रातःसंध्यावंदनादि

उपविश्य प्रणवस्वरूपमग्निं ध्यायन्नग्निसमीपे जागरं कुर्यात्। ततः प्रभाते स्नात्वा प्रातःसन्ध्यादिनैमित्तिकं कृत्वा आग्नेयं वैश्वानरं वा स्थालीपाकं कुर्यात्। ॐ चित्पतिर्म्मा पुनात्वच्छिद्द्रेण पवित्रेण सूर्य्यस्यरश्मिभिः। तस्यते पवित्रपते पवित्र पूतस्ययत्कामः पुनेतच्छकेयम्॥ ॐ वाक्पतिर्म्मापुनात्वच्छिद्द्रेण पवित्त्रेण सूर्य्यस्यरश्मिभिः। तस्यं ते पवित्त्रपते पवित्त्रं पूतस्ययत्कामः पुनेतच्छकेयम्॥ देवो मां सवितापुनात्वच्छिद्रेण पवित्त्रेण सूर्य्यस्यरश्मिभिः।

सं०

नैमित्तिक करके स्थालीपाक करे। फिर जलमें खड़ा होकर 'ॐ चित्पतिर्मा० से

---

अयं स्थालीपाको गृह्याग्निमत एव। नानग्नेः संन्यासाङ्गत्वेन गृह्याग्नेः प्राजापत्येष्टिवदौत्सर्गिकत्वादस्य। तस्मादनग्नेर्नायं स्थालीपाकः।

तच्छकेयं' तक इन तीन मंत्रों का जप करके दर्भ चांदी सोना छोड़े हुए पानी से स्नान करके वस्त्र पहिन कर अग्नि के पश्चिम बैठ कर आचमन प्राणायाम करके

यस्यं ते पवित्रपते पवित्रं पूतस्यन्तकामः पुनेतच्छकेयम् ॥

इति मन्त्रत्रयमप्सु जपित्वा कुशरूप्यहेमजलैः स्नात्वा वाससी परिधाय अग्नेः पश्चिमत उपविश्याचम्य प्राणानायम्य देशकालौ संकीर्त्य संन्यासाङ्गत्वेन विहितं प्राणादिहोमपूर्वकं पुरुषसूक्त-होमं तथा ज्ञानयोग्यताप्राप्त्यर्थं उपपातकादिसकलपापनिवृत्ति-पूर्वकस्वांवयवशुद्ध्यर्थं विरजाहोमं च करिष्ये । तद्यथा–समिद्द्वयं गृहीत्वा आघारावाज्यभागदेवते चाज्येन प्राणादिपञ्चमन्त्रैः

देशकाल का उच्चार करके 'संन्यासांगत्वेन० से करिष्ये' तक पढ़कर संकल्प छोड़े। फिर दो समिधा लेकर 'आघारा० से यक्ष्ये' तक पढ़े और दोनों समिधा

अग्नि में छोड़ दे। फिर ब्रह्मा का वरण करे। अग्नि से उत्तर पूर्वमुख ब्रह्मा व उत्तरमुख यजमान बैठकर ब्रह्मा के दहिने घुटने का स्पर्श करके ब्रह्मा का

पञ्चदेवताः पुरुषं पुरुषसूक्तेन प्रत्यृचं प्राणाद्येकोनविंशतिदेवता विरजामन्त्रैः प्रतिद्रव्यमेकैकसंख्यया समिच्चर्वाज्यैः प्रजापतिं सक्तुदाज्येन शेषेणाग्निं स्विष्टकृतं महाव्याहृतिदेवताः सर्वप्रायश्चित्तदेवताः प्रजापतिं चाज्येनास्मिन्सङ्कल्पितकर्मण्यहं यक्ष्ये॥ इत्युक्त्वाग्नौ समिद्द्वयमादधाति। ततो ब्रह्मवरणम्। अग्नेरुत्तरतः प्राङ्मुखो ब्रह्मा उदङ्मुखो यजमान उपविश्य ब्रह्मणो दक्षिणजानुमालभ्य अमुकगोत्रामुकशर्मन् करिष्यमाणसंन्यासपूर्वांगविहितहवनकर्मणि त्वं ब्रह्मा भव। भवामीति प्रतिवचनम्। ततो ब्रह्मा

नाम गोत्र उच्चार करके 'करिष्यमाण० से भव' तक पढ़कर तुम ब्रह्मा हो ऐसा कहे। ब्राह्मण 'भवामि' ऐसा कहे। फिर ब्रह्मा अग्नि के दक्षिण चुपचाप

आसनसंस्कार करके बैठे। फिर यजमान अग्नि के पीछे अपने आसन पर बैठकर प्रणीताचमन बायें हाथ में उत्तान रखकर दहिने हाथ से जल भर कर पहिले आसन पर रखकर ब्रह्मा के मुख को देखते हुए दूसरे आसन पर रख

**अग्नेर्दक्षिणतस्तूष्णीमासनसंस्कारं कृत्वोपविशेत्। अनन्तरं यजमानः अग्नेः पश्चात्स्वासने उपविश्य प्राणीतचमसं सव्यहस्ते उत्तानं निधाय दक्षिणहस्तेन जलमापूर्य प्रथमासने निधाय ब्रह्मणो मुखमवलोकयन् द्वितीयासने निदधाति। प्रदक्षिणमग्नेः परिस्तरणं दर्भैः। अग्नेः पश्चिमत उत्तरतो वा द्वंद्वशः पात्रासादनम्। पश्चिमे प्राक्संस्थमुदगग्रम्। उत्तरतश्चेदुदक्संस्थं प्रागग्रम्। पवित्र-**

दर्भों से अग्नि का प्रदक्षिण परिस्तरण करे। अग्नि के पश्चिम तरफ से अथवा उत्तर तरफ से अथवा दोनों तरफ से पात्रों को रखे। पात्रों को पश्चिम के तरफ प्राक्संस्थ उदगग्र और उत्तर के तरफ उदक्संस्थ प्रागग्र रखे। पवित्रच्छेदन,

पवित्र, प्रोक्षणीपात्र, आज्यस्थाली, चरुस्थाली, संमार्जनकुश, उपयमनकुश, तीन समिधा, स्रुवा, घी, चावल, पूर्णपात्र इनको रखे। पवित्रकरणादि प्रोक्षणीसंस्कार करे। रखे हुए पात्रों का प्रोक्षण करे। असंचर प्रदेश में प्रोक्षणी रखे। ब्रह्माके

च्छेदनानि पवित्रे च प्रोक्षणीपात्रमाज्यस्थालीचरुस्थालीसंमार्जनकुशाश्च उपयमनकुशाः समिधस्तिस्रश्च स्रुव आज्यं च तन्दुलाः पूर्णपात्रं चेति। पवित्रकरणादिप्रोक्षणीसंस्कारः। यथासादितपात्राणां प्रोक्षणम्। प्रोक्षण्या निधानमसंचरे। आज्यस्थाल्यामाज्यनिर्वापो ब्रह्मणः कुशोपग्रहेण। सपवित्रचरुस्थाल्यां त्रिःप्रक्षालिततंदुलावापो यजमानस्य कुशोपग्रहेणैव प्रणीतोदकासेकश्च। अग्नौ दक्षिणत आज्याधिश्रयणं ब्रह्मणः सोपग्रहेण। उत्तरतश्च-

कुशोपग्रह से घृत के पात्र में घृत छोड़े। यजमान के कुशोपग्रह से पवित्र सहित चरुस्थाली में तीन बार धोये हुए चावल रखे और प्रणीता का जल सिंचन

करे। ब्रह्मा के उपग्रह से अग्नि के दक्षिण तरफ घृत का पात्र रखे। यजमान के उपग्रह से अग्नि के उत्तर तरफ चरु का अधिश्रयण करे। जलते हुए दर्भ से ईशान से लेकर ईशान पर्यंत घी और चरु को प्रदक्षिण पर्यग्निकरण करे। फिर

रोरधिश्रयणं यजमानस्य सोपग्रहेणैव। ज्वलदुल्मुकेनेशानमारभ्येशानपर्यन्तमाज्यचरोः प्रदक्षिणं पर्यग्निकरणम्। हस्तस्येतरथा वृत्तिः। अपस्पर्शः। अर्द्धश्रिते स्रुवस्य प्रतपनम्। संमार्जनकुशैः संमृज्याग्रैर्मूलादारभ्याग्रपर्यन्तं मूलैरग्रादारभ्य मूलपर्यन्तम् प्रणीतोदकेनाभ्युक्ष्य पुनः प्रताप्य दक्षिणतो निदध्यात्। आज्यमुद्वास्यापरं प्रोक्षणीभ्यो निधाय उत्पूय। प्रोक्षणीश्चोत्पूय। आज्य-

हाथ से जल का स्पर्श करे। आधा सीझने पर स्रुवा को तपावे। संमार्जन कुशों से संमार्जन करके अग्र से मूल से लेकर अग्रपर्यंत और संमार्जन कुशों के मूलसे अग्र से लेकर मूल पर्यंत संमार्जन करके प्रणीता के जल से सिंचन करके फिर से

तपाकर दक्षिण तरफ रखे। घृत का उद्वासन करके प्रोक्षणी का उत्पवन करके घी को देखकर अपद्रव्य को दूर करके अनंतर अग्नि के पीछे रखे। फिर भात पर घी छोड़कर उत्तर के तरफ उद्वासन करके घी को पूर्व से लाकर पश्चिम से निकाल-

मवेक्ष्यापद्रव्यं निरस्यानन्तरमग्नेः पश्चान्निदधाति। ततश्चरुमभिघार्य उदगुद्वास्याज्यं पूर्वेणानीय पश्चिमेनाहृत्योत्तरत आसादयेत्। उपयमनान्कुशानादाय समिधोऽभ्याधाय पर्युक्ष्य जुहुयात्। तत्र क्रमः। आसादितानुपयमनकुशान्सव्यहस्ते गृहीत्वा आसादितास्तिस्रः समिधो दक्षिणहस्तेनाग्नौ प्रक्षिप्य प्रोक्षण्युदकेन सपवित्रहस्तेनेशानमारभ्येशानपर्यन्तं प्रदक्षिणमग्निं पर्युक्ष्य। हस्तस्थे-

कर उत्तर के तरफ रखे। उपयमन कुशाओं को और समिधाओं को लेकर जल छिड़क कर होम करे। उसका क्रम-रखे हुए उपयमन कुशाओं को बायें हाथ में लेकर रखे हुए तीन समिधाओं को दहिने हाथ से अग्नि में छोड़कर प्रोक्षणी

का जल और पवित्र हाथ में लेकर ईशान से लेकर ईशान पर्यंत प्रदक्षिण अग्नि को पर्युक्षण करके पवित्रों को प्रणीता में रखकर बाँया हाथ हृदय पर रखकर

तरथा वृत्तिः। पवित्रयोः प्रणीतासु निधानम्। दक्षिणं जान्वाच्योत्तान्नं सोपग्रहं सव्यहस्तं हृदि निधाय ब्रह्मणान्वारब्ध आघारावाज्यभागौ जुहुयात्। तत्र प्रजापतिं ऋजुं-संततं प्राञ्चं विदिशं वा निर्ऋतिमारभ्येशानपर्यन्तं तूष्णीं जुहुयात् ॐ प्रजापतये स्वाहा। इदं प्रजापतये न मम। त्यागोऽपि मनसैव तूष्णीम्। ततस्तद्दक्षिणतः प्राञ्चं ऋजुं संततं विदिशं वा वायव्यादाग्नेयान्तं ॐ इन्द्राय स्वाहा। इदमिन्द्राय न मम। इति त्यागः। तत आज्यभागौ। ईशान्यामग्निम्। समिद्धतमे वा। ॐ अग्नये

ब्रह्मा से अन्वारब्ध आघार और आज्यभाग का हवन करे। उसमें प्रजापति को नैर्ऋत्य दिशा से आरंभ करके ईशान दिशा तक 'ॐ प्रजापतये स्वाहा।

इदं प्रजापतये न मम' कहकर चुपचाप आहुति दे। फिर उसके दक्षिण से वायव्य से आग्नेय तक 'ॐ इन्द्राय स्वाहा। इदमिंद्राय०' इस मंत्र से आहुती दे। ईशान दिशा में 'ॐ अग्नये स्वाहा इदमग्नये०' इस मंत्र से और आग्नेय दिशा में 'ॐ सोमाय स्वाहा। इदं सोमाय०' इस मंत्र से

स्वाहा। इदमग्नये न मम। आग्नेय्यां सोमं। समिद्धतमे वा। ॐ सोमाय स्वाहा। इदं सोमाय न मम। इत्याज्यभागौ हुत्वा। अनन्वारब्धः प्रधानाहुतीर्जुहुयात्। प्राणादिपञ्चमन्त्रैः समिच्चर्वाज्यानि प्रतिद्रव्यं सकृत्सकृत्। ॐ प्राणाय स्वाहा। इदं प्राणाय न मम। ॐ अपानाय स्वाहा। इदमपानाय न मम। ॐ व्यानाय स्वाहा। इदं व्यानाय न मम। ॐ उदानाय स्वाहा।

आज्यभाग का हवन करके अनन्वारब्ध प्रधान आहुतियों का हवन करे। 'ॐ प्राणाय स्वाहा० से इदं समानाय०' तक पांच मंत्रों से समिधा, भात और घी

हरेक द्रव्य की एक एक आहुति दे। बाद पुरुषसूक्त की सोलह ऋचाओं से हर एक ऋचा कह कर समिधा, भात और घी की पृथक् २ आहुति दे। आहुति छोड़ते वक्त हर एक ऋचा कह कर पीछे से 'इदं पुरुषाय न मम'

इदमुदानाय न मम। ॐ समानाय स्वाहा। इदं समानाय न मम। ततः पुरुषसूक्तस्य षोडशर्चैः प्रत्यृचं क्रमेण द्रव्यत्रयाणि जुहुयात्। इदं पुरुषाय न मम इति प्रत्यृचं त्यागः। अथविरजामन्त्रैः प्रतिमन्त्रमेतैरेव द्रव्यैः क्रमेण प्रतिद्रव्यं सकृत्सकृदेकोनविंशदाहुतीर्जुहुयात्। तद्यथा। ॐ प्राणापानव्यानोदानसमाना मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास ꣳ स्वाहा। इदं प्राणा-

ऐसा कहे। फिर विरजा मंत्रों से हर एक मंत्र कह कर इन्हीं तीन द्रव्यों से अलग २ उन्नीस आहुति हवन करे। उसका प्रकार 'ॐ प्राणापान-

दिभ्यो न मम। ॐ वाङ्मनश्चक्षुश्श्रोत्रजिह्वाघ्राणरेतोबुद्ध्याकूतिः सङ्कल्पा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास ॐ स्वाहा। इदं वागादिभ्यो न मम। ॐ त्वक्चर्ममांसरुधिरमेदोमज्जास्नायवोऽस्थीनि मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास ॐ स्वाहा। इदं त्वगादिभ्यो न मम। ॐ शिरःपाणिपादपार्श्वपृष्ठोरूदरजङ्घाशिश्नोपस्थपायवो मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास ॐ स्वाहा। इदं शिर आदिभ्यो न मम। ॐ उत्तिष्ठ पुरुष हरितपिंगललोहिताक्ष देहि देहि ददापयिता मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास ॐ स्वाहा। इदं पुरुषाय न मम। ॐ पृथिव्यप्तेजोवायुराकाशा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास ॐ स्वाहा। इदं पृथिव्यादिभ्यो न मम।

ॐ शब्दस्पर्शरूपरसगन्धा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास ऀ स्वाहा। इदं शब्दादिभ्यो न मम । ॐ मनोवाक्कायकर्माणि मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास ऀ स्वाहा । इदं मन आदिभ्यो न मम । ॐ अव्यक्तभावैरहंकारैर्ज्योतिरहं विरजा विपाप्मा भूयास ऀ स्वाहा । इदमव्यक्तादिभ्यो न मम । ॐ आत्मा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास ऀ स्वाहा । इदमात्मने न मम । ॐ अन्तरात्मा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास ऀ स्वाहा । इदमन्तरात्मने न मम । ॐ परमात्मा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास ऀ स्वाहा । इदं परमात्मने न मम । ॐ क्षुधे स्वाहा । इदं क्षुधे न मम । ॐ क्षुत्पिपासायै स्वाहा ।

व्यानोदानसमाना मे शुध्यंतां० से इदमन्नमयादिभ्यो न मम' तक उन्नीस मंत्रों को पढ़ कर समिधा, चरु, और घी इन हर एक द्रव्य से उन्नीस

इदं क्षुत्पिपासायै न मम। ॐ विविघ्यै स्वाहा। इदं विविच्यै न मम। ॐ ऋग्विधानाय स्वाहा। इदं ऋग्विधानाय न मम। ॐ कषोत्काय स्वाहा। इदं कषोत्काय न मम। ॐ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम्। अभूतिमसमृद्धिं च सर्वां निर्णुद मे पाप्मान ँ स्वाहा। इदमग्नये न मम। ॐ अन्नमयप्राणमयमनोमयविज्ञानमयानंदमयमात्मा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास ँ स्वाहा। इदमन्नमयादिभ्यो न मम। एवं समिच्चर्वाज्यैः प्रतिद्रव्यं चत्वारिंशच्चत्वारिंशदाहुती-

उन्नीस आहुति दे। इसी प्रकार हर एक वस्तु से चालीस चालीस आहुति होम

करके 'ॐ यदिष्टं० इदं प्रजापतये न मम' तक पढ़कर आज्याहुति दे। तदनंतर 'ॐ सहस्रशीर्षा० से स्रवंतु नः' तक जप कर के स्रुवा से 'ॐ अपो स्विष्टकृते हुत्वा। आज्याहुतिं जुहुयादनेन मन्त्रेण। ॐ यदिष्टं यच्चपूर्तं यच्चापद्यनापदि। प्रजापतौ तन्मनसि जुहोमि विमुक्तोऽहं देव-किल्बिषात्स्वाहा। इदं प्रजापतये न मम। ततः पुरुषसूक्तं अग्नि-मीळ इत्यादिचतुर्वेदादींश्च जपित्वा। ॐ सहस्रशीर्षा० सन्ति देवाः॥ ॐ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्॥ ॐ इषेत्वोर्ज्जेत्वावायवस्थदेवोवः सविताप्रार्पयतु श्रेष्ठतमाय कर्म्मणऽआप्यायद्ध्वमघ्न्याऽइन्द्राय भागम्प्रजावतीरन-मीवाऽअयक्ष्मा भावस्तेन ईशतमाघशंसोद्ध्रुवाऽअस्मिन्गोपतौ स्यात् बह्वीर्यजमानस्य पशून्पाहि। ॐ अग्न आयाहि वीतये

गृणानो हव्यदातये। निहोता सत्सि बर्हिषि ॥ ॐ शन्नोदेवी-
रभिष्टय आपो भवन्तु पीतये। शय्योरभि स्रवन्तु नः।
ततश्चरोरुत्तरार्धादसंसृष्टामाहुतिभिर्जुहोति स्विष्टकृतम्। स्रुवेणैव।
ॐ अपोस्विष्टकृते स्वाहा। इदमग्नये स्विष्टकृते न मम।
आज्येन प्रायश्चित्तहोमः। ॐ भूः स्वाहा। इदमग्नये न मम। ॐ भुवः
स्वाहा। इदं वायवे न मम। ॐ स्वः स्वाहा। इदं सूर्याय न मम।
ॐ त्वन्नोऽअग्ने व्वरुणस्याव्विद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥
यजिष्ठोवह्नितमः शोशुचानो व्विश्वाद्वेषाᳬसिप्रमुमुग्ध्यस्मत्स्वा-
हा। इदमग्नीवरुणाभ्यां न मम। ॐ सत्वन्नोऽअग्नेवमोभवोतीनेदि-

स्वाहा। इदमग्नये स्विष्टकृते०' पढ़कर स्विष्टकृत् होम करे। फिर घृत से 'ॐ

ष्ठो अस्याऽउषसोऽव्युष्टौ ॥ अवंयक्ष्वनो व्वरुणꣳ रराणोव्वीहिमृ-
डीकꣳ सुहवोनऽएधि स्वाहा। इदमग्नीवरुणाभ्यां न मम।
ॐ अयाश्चाग्नेस्यनभिशस्तीश्च सत्यमित्वमया असि। अयासा
वयसा कृतो यासन्हव्य मूहिषेयानोधेहि भेषजꣳस्वाहा।
इदमग्नयेऽयसे न मम। ॐ येते शतं० स्वर्काः स्वाहा।
इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः
स्वर्केभ्यश्च न मम। ॐ उदुत्तमम्व्वरुण.पाशमस्मदवा धमं
व्विमध्यमꣳश्रथाय। अथावयमादित्यव्व्रते तवानागसोऽअदितये
स्याम स्वाहा। इदं वरुणायादित्यायादितये न मम। ॐ प्रजापतये
स्वाहा। इदं प्रजापतये न मम। इति होमं समाप्य संस्रवप्राश-

भूः स्वाहा० से इदं प्रजापतये न मम' तक पढ़कर प्रायश्चित्त होम समाप्त करके संस्रव प्राशन करे। फिर आचमन करके पवित्रों से मार्जन करे। अग्नि में पवित्र

नम्। आचम्य पवित्राभ्यां मार्जनम्। अग्नौ पवित्रप्रतिपत्तिः। ब्रह्मणे पूर्णपात्रदानम्। कृतैतत्संन्यासपूर्वाङ्गविहितहवनकर्मणा-ङ्गतया विहितं पूर्णपात्रं दक्षिणात्वेन ब्रह्मन्तुभ्यमहं संप्रददे। इति दत्वा। अग्नेः पश्चात्प्रणीताविमोकः। ब्रह्माचार्ययोर्गोहिरण्यवस्त्राणि दद्यात्। कृतैतत्कर्मणः सांगतासिध्यर्थं गोनिष्क्रयहिरण्यवस्त्राणि आचार्यब्रह्मभ्यामहं सम्प्रददे। इति दत्वा भूयसीं च दत्वा कर्मेश्वरार्पणं कुर्यात्। कृतैतत्कर्मणि न्यूनातिरिक्तदोषपरिहारार्थं नानानाम-

छोड़े 'कृतैत० से संप्रददे' तक पढ़ कर ब्रह्मा को पूर्णपात्र का दान करे। अग्नि के पीछे प्रणीता विमोक करे। ब्रह्मा और आचार्य को 'कृतैत० से संप्रददे'

तक संकल्प पढ़ कर गाय, सुवर्ण, वस्त्र इत्यादि दे। 'कृतैतत्कर्मणः० से दास्ये' तक संकल्प पढ़कर भूयसी दक्षिणा दे। 'मया० से मस्तु' तक संकल्प पढ़कर कर्म ईश्व-

गोत्रेभ्यो ब्राह्मणेभ्यो भूयसीं दक्षिणामहं दास्ये। मया करिष्य-माणसंन्यासपूर्वाङ्गविहितं यत्कृतं कर्म तत्सद्ब्रह्मार्पणमस्तु। इति कुशयवजलानि भूमौ क्षिपेत्। यस्य स्मृत्या च नामोक्त्या न्यासयज्ञक्रियादिषु। न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम्॥ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्। स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति स्मृतिः। इत्युक्त्वा विष्णुं स्मरेत्। ततोऽग्निमुपतिष्ठेत। ॐ संमासिंचंतुमरुतः समिंद्रः संबृहस्पतिः। संमापमग्निः सिंचतु प्रजया च धनेन च॥ इत्युपस्थाय।

रार्पण करे। फिर कुशयव जल को पृथ्वीपर छिड़के। 'यस्य स्मृत्या०' पढ़कर विष्णु का स्मरण करे। 'ॐ संमासिंचंतु० से धनेन च' तक पढ़ कर अग्नि का

उपस्थान करे। 'अग्नेनय० से विधेम' तक पढ़कर अग्नि को नमस्कार करे। तदनंतर हाथ पैर प्रक्षालन करके आचमन करके 'ॐ एह्यग्ने० से परागाः' तक

अग्ग्नेनयंसुपथांरायेऽअस्म्मान्न्विश्श्वांनिदेवव्वयुनांनिव्विद्द्वान् ॥ युयोद्ध्यस्म्मज्जुंहुराणमेनोभूयिष्ठान्तेनमंऽउक्तिंव्विधेम ॥ इति मन्त्रेण नमस्कृत्य विसृजेत्। ततः हस्तौ पादौ प्रक्षाल्याचम्य। ॐ एह्यग्नेसहेष्टापूर्वेशरीरमनुसंचरन्नाहं त्वामपहाय परागामामपहाय परागाः। इति मन्त्रेणाग्निं विसृज्य पुत्रादिभ्यः आशिषं दद्यात्। सर्वे भवन्तु वेदाढ्याः सर्वे भवन्तु सोमपाः। सर्वे पुत्रमुखं दृष्ट्वा सर्वे भवन्तु भिक्षुकाः ॥ इति। अनन्तरं योग्यपुत्रं प्रति

पढ़कर अग्नि का विसर्जन करके 'सर्वे० से भिक्षुकाः' तक पढ़ कर पुत्रों को

आशीर्वाद दे । अनंतर योग्य पुत्र को 'त्वं ब्रह्मा त्वं यज्ञस्त्वं लोकः' ऐसा कहे। फिर पुत्र 'अहं ब्रम्हाहं यज्ञोऽहं लोकः' ऐसा प्रतिवचन कहे । यदि पुत्र न हो तो 'अहं ब्रम्हाहं यज्ञोऽहं लोकः' ऐसा स्वयं ही जप करे । 'शिवं० से कस्य-

त्वं ब्रह्म त्वं यज्ञस्त्वं लोकः । इति ब्रूयात् । स पुत्रः अहं ब्रह्माहं यज्ञोऽहं लोकः । इति प्रतिब्रूयात् । यद्यपुत्रस्तदा-अहं ब्रह्माहं यज्ञोऽहं लोकः । इति स्वयमेव जपेत् । शिवं स्वस्त्यस्तु सर्वेभ्यः न मे कश्चिन्नाहं कस्यचित् ॥ इत्युक्त्वा पुत्रान्सुहृदो बन्धून्विसर्जयेत् । ततः कृष्णाजिनमादाय ॐ अद्भ्यः सम्भृतः पृथिव्यैरसाच्चाविश्वकर्म्मणःसमवर्त्तताग्रे ॥ तस्य त्वष्टा

चित्' तक पढ़कर पुत्र, मित्र और बंधुओं का विसर्जन करे । तदनंतर कृष्णाजिन लेकर 'अद्भ्यः संभृ०' इन छ ऋचाओं से सूर्य का उपस्थान करके दंडादिक

विदथंद्रूपमौति तन्मर्त्यस्य देवत्वमाजानमग्ग्रे ॥ वेदाहमेतम्पुरुष-
म्महान्तमादित्यवर्ण्णन्तमसः परस्तात् ॥ तमेव विदित्वातिमृत्यु-
मेतिनान्न्यःपन्थाविद्यतेयनाय ॥ प्रजापतिश्चरतिगर्ब्भे अन्तर जाय-
मानो बहुधाविजायते ॥ तस्ययोनिम्परिपश्यन्ति धीरास्तस्मिन्न्ह-
तस्त्थुर्ब्भुवनानि विश्वा ॥ यो देवेब्भ्यऽआतपतियो देवानाम्पुरो-
हितः ॥ पूर्वोयो देवेब्भ्यो जातो नमो रुचाय ब्राह्मये ॥ रुचम्ब्रा-
ह्मञ्जनयन्तो देवाऽअग्ग्रेतदब्रुवन् ॥ यस्त्वैवम्ब्राह्मणोविद्यान्तस्य
देवाऽअसन्वशे ॥ श्रीश्चते लक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्ष-
त्राणिरूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाण सर्वलो-

लेकर घर से निकल कर नदी किनारे जाकर हाथ पैर धोकर आचमन करके

कर्म्मऽइषाण ॥६॥ इति षड्ऋचेनोत्तरनारायणेन सूर्यमुपस्थाय दंडादिकं गृहीत्वा गृहान्निष्क्रम्य जलाशयं गत्वा हस्तौ पादौ प्रक्षाल्याचम्य अंजलिना जलमादाय

ॐ आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् ॥ सङ्क्रन्दनो निमिषऽएकवीरः शतꣳ सेनाऽअजयत्साकमिन्द्रः ॥ सङ्क्रन्दनेनानिमिषेण जिष्णुनायुत्कारेण दुश्च्यवनेन धृष्णुना ॥ तदिन्द्रेण जयत तत्सहध्वं युधो नरऽइषुहस्तेन वृष्णा ॥ सऽइषुहस्तैः सनिषङ्गिभिर्वशी सꣳस्रष्टा सयुधऽइन्द्रो

अंजलि से जल लेकर 'ॐ आशुः शिशान' इस बारह ऋचा के सूक्त से

गणेन ॥ सꣳसृष्टजित्सोमपाबाहुशर्द्ध्युग्ग्रधन्न्वाप्प्रतिहिताभि-
रस्ता ॥ बृहस्प्पतेपरि दीयारथेन रक्षो हामित्त्राँ २ऽअपबाधमानः ॥
प्प्रभञ्जन्त्सेनाः प्प्रमृणोयुधाजयन्नस्म्माकमेद्ध्यविताराथानाम् ॥ बल-
विज्ञायस्त्थविरः प्प्रवीरः सहस्वान्न्वाजी सहमान उग्ग्रः ॥ अभिवीरोऽअ-
भिसत्त्वा सहोजा जैत्त्रमिन्द्ररथमातिष्ठगोवित् ॥ गोत्त्रभिदङ्गोविदं वज्ज्र
बाहुञ्जयन्त मज्ज्मप्प्रमृणन्तमोजसा ॥ इमꣳसजाताऽअनुवीरयद्ध्वमि-
न्द्रꣳसखायोऽअनुसꣳरभद्ध्वम् ॥ अभिगोत्त्राणि सहसा गाहमानो-
दयो वीरः शतमन्न्युरिन्द्रः ॥ दुश्च्च्यवनः पृतनाषाडयुद्ध्योस्म्माकꣳ
सेनाऽअवतुप्प्रयुत्सु ॥ इन्द्रऽआसान्नेता बृहस्पतिर्द्दक्षिणायज्ञः पुरऽएतु-

सोमः ॥ देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतोयन्त्वग्ग्रम् ॥
इन्द्रस्य वृष्णो वरुणस्यराज्ञआदित्यानाम्मरुताᳬशर्द्धउग्ग्रम् ॥
महामनसाम्भुवनच्यवानाङ्घोषोदेवानाञ्जयतामुदस्थात् ॥ उद्धर्ष-
यमघवन्नायुधान्युत्सत्वनाम्मामकानाम्मनाᳬसि ॥ उद्वृत्रहन्वा-
जिनां वाजिनान्युद्रथानाञ्जयतायन्तुघोषाः ॥ अस्माकमिन्द्रः
समृतेषुध्वजे ष्वस्माकंयाइषवस्ताजयन्तु ॥ अस्माकं वीराउत्तरे
भवन्त्वस्माँ २ उदेवाअवता हवेषु ॥ अमीषाञ्चित्रम्प्रतिलोभयन्ती
गृहाणाङ्गान्यप्वे परेहि ॥ अभिप्रेहिनिर्दहहत्सुशोकैरन्धेनामित्त्रा
स्तमसासचन्ताम् ॥ १३०

अभिमंत्रित करके 'ॐ सर्वाभ्यो देवताभ्यः स्वाहा' कहकर छोड़ दे। मध्याह्न काल हो तो स्नान से लेकर तर्पणांत कर्म करे। फिर तिथ्यादिका उच्चार करके 'ॐ अपरोक्षब्रह्मावाप्तये संन्यासं करोमि' कह कर संकल्प करके जल की

इति द्वादशर्चेन सूक्तेनाभिमन्त्र्य । ॐ सर्वाभ्यो देवताभ्यः स्वाहा। इति त्यजेत् । मध्यान्हकालश्चेत्कालप्राप्तस्नानादितर्पणान्तं कुर्यात्। ततस्तिथ्यादि स्मृत्वा अपरोक्षब्रह्मावाप्तये सन्यासं करोमि। इति सङ्कल्प्य जलाञ्जलिं गृहीत्वा। ॐ एष वा अग्निः सूर्यः प्राणं गच्छ स्वाहा । ॐ स्वायोनिं गच्छ स्वाहा । ॐ आपो वै गच्छ स्वाहा । इति मन्त्रत्रयेण जलेऽञ्जलित्रयं दद्यात् । पुत्रैषणावित्तैषणालोकैषणा मया परित्यक्ता अभयं सर्वभूतेभ्यः स्वाहा ।

अंजली लेकर 'ॐ एष वा० से संगच्छ स्वाहा' तक इन तीन मंत्रों से जल में तीन अंजलि दे। 'पुत्रैषणा० से स्वाहा' तक पढ़ कर जल की पूर्णांजलि जल में छोड़े।

इत्यपां पूर्णाञ्जलिं जले क्षिपेत् । सर्वं ब्राह्मेति चिन्तयन् पुनरपां पूर्णाञ्जलिं जले क्षिप्त्वा पठेत् । यत्किञ्चिद्बन्धकं कर्म कृतमज्ञानतो मया । प्रमादालस्यदोषोत्थं तत्सर्वं सन्त्यजाम्यहम् ॥ त्यक्तसर्वो विशुद्धात्मा गतस्नेहः शुभाशुभः । कामक्रोधादिकं सर्वं त्यक्तं चैवमुदाहरेत् ॥ एतत्त्यजाम्यहं सर्वं कामभोगसुखादिकम् । रोषं तोषं विवादं च गन्धमाल्यानुलेपनम् ॥ भूषणं नर्तनं गेयं दानमादानमेव च । नमस्कारं जपं होमं याश्च नित्याः क्रिया मम ॥ नित्यं नैमित्तिकं काम्यं वर्णधर्माश्रमाश्च ये । गुणधर्माश्च ये केचिच्छुभाशुभफलानि च ॥ कारणं कार्यकर्तृत्वं कर्तारं करणैः सह । सर्वमेतत्परित्यज्य बुद्ध्यधिष्ठितमानसः ॥ चतु-

'सर्वं ब्रह्म' ऐसा चिंतन कर फिर से जल की पूर्णांजलि जल में छोड़कर 'यत्कि-

विधस्य सन्नात्मा भूतग्रामस्य निस्पृहः। कृतं चैवेक्षितं चैव वाञ्छितं चानुमोदितम् ॥ सञ्चिन्त्य सर्वभूतेभ्यो ददाम्यभय-दक्षिणाम्। पद्भ्यां कराभ्यां विहरन्नाहं वाक्कायमानसैः॥ करिष्ये प्राणिनां पीडां प्राणिनः सन्तु निर्भयाः। देहे जलेऽम्बरे भूमौ स्थावरा जङ्गमाश्च ये॥ लोमवस्त्रादिधान्येषु शयनेष्वासनेषु च। ते स्वपन्तु विशुध्यन्तु सुखतो मद्भयं विना॥ दत्त्वैवं सर्वभूतेभ्यः सर्वत्राभयदक्षिणाम्। करुणो मैत्रवृत्तिश्च प्रज्ञावृद्धिं च संस्थितः॥ ततो विचिन्तयेद्धीमान्सर्वमात्मनि संस्थितम्। कोऽस्ति मे कश्च मे नास्ति शुद्ध एकोऽहमच्युतः॥ संसारादित्यततोऽहं विप्लुष्टो देहमानसैः। ब्रह्मज्ञानाम्बुशीतेन सिंच मां वाक्यवारिणा॥ न मेऽस्ति बान्धवः कश्चिन्मुक्त्वात्मानं परावरम्। ममात्मैव परो

चिद्बंधकं० से नरस्य वृत्तिम्' तक श्लोक पढ़कर कर्म के साक्षी आदित्यचंद्रादि सब देव गुरू ब्राह्मण आदिकों को अपने संन्यास के साक्षित्व से ध्यान कर

बन्धुरूर्ध्वाधः पृष्ठतोऽग्रतः ॥ इन्द्रियैर्विषयैः सर्वमध्याद्यन्तर्बहिःस्थितिः । विश्वेश्वरो महात्मा वै सर्वज्ञः सर्वतोमुखः ॥ त्यक्तभीरभयं दत्वा सर्वज्ञमगमीश्वरम् । व्यक्ताव्यक्तं परं शुद्धं सत्यं निश्चित्य तत्वतः । एतत्प्रैषान्ब्रुवन्क्रुद्धो दिशश्चैवावलोकयन् । आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं मनश्च । अहश्च रात्रिश्च उभे च सन्ध्ये धर्मो हि जानाति नरस्य वृत्तिम् ॥ इत्यादित्यचन्द्रादीन्कर्मसाक्षिणो निखिलान्देवान् गुर्वादिब्राह्मणांश्च स्वसंन्याससाक्षित्वेन ध्यात्वा नाभिमात्रं जलं प्रविश्य

नाभिप्रमाण जल में प्रवेश कर पूर्वमुख होकर पहले की तरह व्याहृतियों में

सावित्री प्रवेश करके 'परो रजसे सावदो३म्' ऐसा जप करके 'व्याहृतीः प्रणवे प्रवेशयामि' ऐसा संकल्प करे। 'ॐ भूः० से प्रवेशयामि' तक पढ़कर

प्राङ्मुखः सन्पूर्ववत्सावित्रीप्रवेशं व्याहृतिषु कृत्वा परोरजसेसावदो३म्। इति जपित्वा व्याहृतीः प्रणवे प्रवेशयामि इति सङ्कल्प्य। ॐ भूः प्रणवे प्रवेशयामि। ॐ भुवः प्रणवे प्रवेशयामि। ॐ स्वः प्रणवे प्रवेशयामि। ॐ भूर्भवः स्वः प्रणवे प्रवेशयामि। इति व्याहृतीः प्रणवे प्रवेश्य प्रणवमयमात्मानं ध्यात्वा चित्पतिर्मेति मन्त्रत्रयं पूर्ववज्जपित्वा ॐ उदुत्यञ्जातवेदसन्देवंव्वहन्ति केतवः॥ दृशे विश्वाय सूर्य्यं स्वाहा॥ ॐ चित्रन्देवानामुदगादनी-

व्याहृतियों को प्रणव में प्रवेश कराकर प्रणवमय अपने को ध्यान करके 'ॐ चित्पतिर्मा०' इत्यादि तीन मंत्रों का पहिले की तरह जप करके 'ॐउदुत्यञ्जात०

कश्चक्षुर्म्मित्त्रस्यव्वरुणस्याग्ग्नेः ॥ आप्प्राद्यावापृथिवीऽअन्तरिक्षᳫं सूर्य्यऽआत्त्मा जगतस्तस्त्थुषश्च स्वाहा ॥ ॐ तच्चक्षुर्द्देवहितम्पुरस्ताच्छुक्क्रमुच्चरत् ॥ पश्येमशरदः शतञ्जीवेमशरदः शतᳫं शृणुयाम शरदः शतम्प्रब्रवामशरदः शतमदीनाᳫं स्यामशरदः शतम्भूयश्च शरदः शतात् ॥ ॐ हᳫं सः शुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्द्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऽऋतजाऽअद्रिजाऽऋतम्बृहत् ॥ ॐ नमो मित्त्रस्य व्वरुणस्य चक्षसे महोदेवाय तदृतᳫं सपर्य्यत ॥ दूरेदृशेदेवजाताय केतवेदिवस्पुत्त्रायसूर्य्याय शᳫंसत ॥ नमः सवित्रे जगदेकतस्थुषे जगत्प्रसूतिस्थितिनाश-

चक्षुषे

से त्मने नमः' तक इन मंत्रों से सूर्य का उपस्थान करके 'पुत्रैष० से चरामि' तक पढ़ कर जल से जल में होम करे। अनंतर प्रैषोच्चार करे। ऊपर हाथ करके पूर्वमुख खड़ा होकर 'ॐ भूः संन्यस्तं०' इत्यादि चार प्रैष वाक्यों को तीन बार

हेतवे। त्रयीमयाय त्रिगुणात्मधारिणे विरञ्चिनारायणशङ्करात्मने नमः॥ इत्येतैर्मन्त्रैः सूर्यमुपस्थाय पुत्रैषणाया वित्तैषणाया लोकैषणायाश्च व्युत्थितोऽहं भिक्षाचर्यं चरामि। इति जलेन जलं जुहुयात् चुलुकेन। अथ प्रैषोचारः। ऊर्ध्वबाहुः प्राङ्मुखस्तिष्ठन् ॐ भूः संन्यस्तं मया। ॐ भुवः संन्यस्तं मया। ॐ स्वः संन्यस्तं मया। ॐ भूर्भुवः स्वः संन्यस्तं मया। इति प्रैषवाक्यानि त्रिर्मन्द्रेण त्रिर्मध्यमेन त्रिरुच्चैरुच्चारयेत्। ततः अभयं सर्वभूतेभ्यो मत्तः

धीरे से तीन बार मध्यम स्वर से और तीन बार ऊँचे स्वर से उच्चारण करे। फिर 'अभयं सर्वभूतेभ्यो मत्तः स्वाहा' कह कर पूर्व दिशा में जल की पूर्णा-

...कि को ...क ...र ...थे पर रखे हुए ...शों को उखाड़ कर जनेऊ को भी
निकाल कर दोनों को एकट्ठा कर हाथ में लेकर 'वेदांत० से स्वाहा' तक पढ़

स्वाहा। इति प्राच्यां दिशि अपां पूर्णाञ्जलिं क्षिप्त्वा शिरसि स्थापितकेशानुत्पाट्य यज्ञोपवीतमप्युद्धृत्य एकीकृत्य करे गृहीत्वा-
वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः।
ते ब्रह्मलोकेतु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे॥ ॐ आपो वै सर्वा देवताः सर्वाभ्यो देवताभ्यो जुहोमि। ॐ भूः स्वाहा। इत्यप्सु जलैः सह हुत्वा विष्णुं प्रार्थयेत्। सर्वदेवात्मके तोये तोयाहुतिमहं करे। दत्त्वा सर्वेषणां त्यक्त्वा युष्मच्छरणमागतः॥ त्राहि मां सर्वलोकेश गतिरन्या न विद्यते।

कर जल में जल के साथ होम करके 'सर्वदेवात्मने० से पुरुषोत्तम' तक पढ़कर

प्राध्यं० विष्णु की प्रार्थना करे। जल प्रवेश से लेकर प्रार्थना तक जलमें खड़े होकर ही करना चाहिये। इस तरह प्रार्थना करके विद्वान् संन्यासी जल से निकल कर
।५५।। उत्तरमुख होकर वस्त्र का त्याग करके नंगा होकर उत्तर दिशा में गमन करे।

संन्यस्तं मे जगन्नाथ पाहि मां मधुसूदन ॥ त्राहि मां सर्वदेवेश वासुदेव सनातन। संन्यस्तं मे जगद्योने पुण्डरीकाक्ष मोक्षद॥ अहं सर्वाभयं दत्वा भूतानां परमेश्वर। युष्मच्छरणमापन्नस्त्राहि मां पुरुषोत्तम ॥ इत्येतैः श्लोकैः विष्णुप्रार्थनां कुर्यात्। जलप्रवेशाद्येतावत्कृत्यं जले। इति संप्रार्थ्य विद्वन्संन्यासी जलादुत्तीर्योदङ्मुखः सन्वस्त्रं त्यक्त्वा यथाजातरूपधरो दिगम्बर उदीचीं दिशं प्रति महापथं गच्छेत्। कौपीनदण्डादिकं किमपि न प्रति-

लंगोटी, दंड इत्यादि कुछ भी न ले। काशी इत्यादि क्षेत्रों में रह कर हाथ पर भिक्षा लेकर भोजन करे और पेड़ के नीचे सुख से रहे। अथवा कुछ जानने

की इच्छा हो तो जल से निकल कर वस्त्र का त्याग करके नग्न होकर पाँच अथवा सात पैर चले। फिर जाने वाले जिज्ञासु संन्यासी को आचार्य अथवा कोई दूसरा ब्राह्मण साष्टांग नमस्कार करके अतिप्रिय वाक्य से 'भो भगवंस्तिष्ठ

गृह्णीयात्। काश्यादि क्षेत्रवासं कुर्वन् करतलभिक्षातरुतलवासादिना यथासुखं विहरेत्। विविदिषुश्चेज्जलादुत्तीर्य वस्त्रं त्यक्त्वा दिगम्बरः पञ्च सप्त वा पदानि गच्छेत्। तं गच्छन्तं जिज्ञासुं आचार्योऽन्यो वा ब्राह्मणः कश्चिद्दण्डवत्प्रणम्य भो भगवंस्तिष्ठ तिष्ठेत्यतिप्रियवचनेन स्वशरीरोपभोगाय लोकोपकाराय च कौपीनादिकं गृहाणेत्युक्त्वा कौपीनादिकं दद्यात्। स्वयमेव वा प्रणवेन गृह्णीयात्। ततः कौपीनं बहिर्वासश्च परिधाय द्विराचम्य दण्डं

तिष्ठ स्वशरीरोपभोगाय लोकोपकाराय च कौपीनादिकं गृहाण' ऐसा कहकर लंगोटी आदि दे अथवा संन्यासी स्वयं ही प्रणव को उच्चारण करके ग्रहण करे।

फिर लंगोटी और वस्त्र पहिन कर दो बार आचमन करके ॐ इन्द्रस्य० से भवाद्य मे' तक पढ़कर दंड की प्रार्थना करे। फिर 'ॐ सखे मां गोपायौजः सखायोसि' इस मंत्र से दण्ड, प्रणव से कमंडलु, और 'इदं विष्णु०' इस मंत्र से आसन

प्रार्थयेत्। ॐ इन्द्रस्य वज्रोसि वार्त्रघ्नः शर्ममेभव यत्पापं तन्निवारय। विष्णुहस्ते यथा चक्रं शूलः शिवकरे यथा। इन्द्रहस्ते यथा वज्रं तथा दण्ड भवाद्य मे॥ इति संप्रार्थ्य। ॐ सखे मां गोपायौजः सखायोसि। इत्यनेन मन्त्रेण दण्डं प्रणवेन कमण्डलुं इदं विष्णुरिति मन्त्रेण आसनं च गृहीत्वा विष्णुं स्मरन्दण्डादियुक्तः समित्पाणिर्गुरुसमीपे गत्वा प्रणिपत्य गरुडासनेनोपविश्य करसम्पुटं कृत्वा गुरुं प्रार्थयेत्। श्रीगुरो भगवन् अस्मात् घोर-

लेकर विष्णु का स्मरण करता हुआ दंड आदि से युक्त हाथ में समिधा लेकर गुरु समीप जाकर नमस्कार करके गरुड़ासन से बैठकर हाथ का संपुट करके

संसारात् समुद्धर असकृद्गर्भजन्मजरामरणादिभयात् आत्मज्ञानेन मां तारय। भूतानामभयं दत्वा युष्मच्चरणमागतः। त्राहि मां योगिनामीश नान्यस्त्रातास्ति मे प्रभो॥ निःस्पृहः सर्वतः शान्तः सर्वविद्याविशारदः। सर्वसंशयसंछेत्ताऽनलसो गुरुराड्यम्॥ त्रायस्व भो जगन्नाथ गुरो संसारवन्हिना। दग्धं मां कालदष्टं च त्वामहं शरणं गतः॥ अद्यप्रभृति भूतानि न हिंस्यामि कदाचन। महाव्रतं करिष्यामि कर्मणा मनसा गिरा॥ अविद्याकृष्णसर्पेण दष्टं तद्विषपीडितम्। स्ववाक्यामृतपानेन संजीवय पुनर्मृतम्॥ संसारादित्यतप्तोऽहं विप्लुष्टो देहमानसैः। ब्रह्मज्ञानाम्बुशीतेन सिंच मां वाक्यवारिणा॥ न मेऽस्ति बान्धवः कश्चिन्मुक्त्वात्मानं परावरम्। तमात्मैव परो बन्धुरूर्ध्वाधः पृष्ठ-

'श्री गुरो भगवन्० मे पृष्ठतोऽग्रतः' तक पढ़ कर गुरु की प्रार्थना करे। फिर

'यो ब्रह्माणं० से प्रपद्ये' तक पढ़ कर उपस्थान करे । बाद दहिना घुटना जमीन में टेक कर ईश्वर बुद्धि मन में रखकर गुरु का दहिना पैर दहिने हाथ से और बायां पैर बायें हाथ से घुटने से लेकर नीचे तक स्पर्श करके 'भो गुरो

**तोऽग्रतः ॥ इति स्तुत्वा उपतिष्ठते । यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तꣳहदेवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये । इत्युपस्थाय दक्षिणजान्वा चोपविश्य भगवद्-बुद्ध्या गुरोर्दक्षिणपादं स्वदक्षिणहस्तेन सव्यञ्च सव्यहस्तेन जानु-प्रभृतिपादपर्यन्तं स्पृष्ट्वा भो गुरो अभिवादयामीत्युच्चारयञ्छिरोव-नतिपूर्वकमभिवाद्य । अधीहि भगवो ब्रह्म । इत्युक्त्वा उदङ्मुखः आच्छादितपादः ऊर्ध्वजानुः संयतहस्तः अवनतमस्तकः अनपा-**

अभिवादयामि' ऐसा कहके माथा नीचा करके गुरु को नमस्कार करके 'अधीहि भगवो ब्रह्म' ऐसा कह कर उत्तर मुँह पैर ढाँप कर घुटने ऊपर करके

माथा नीचे करे किसी चीज का आश्रय न लेकर गुरु के पास बैठे। तदनंतर गुरु उत्तर मुँह होकर अद्वैत सच्चिदानंद रूप की अपने में भावना करके जल से

श्रितः गुरुसमीप आसीत्। तत उदङ्मुखो गुरुः अद्वैतसच्चिदानन्द-रूपमात्मानमनुसन्धाय जलपूर्णं शङ्खं तुलस्यादिभिरभ्यर्च्य प्रण-वेन द्वादशवारमभिमन्त्र्य तेनोदकेन प्रणवेन शिष्यशिरोऽभिषिच्य वक्ष्यमाणं ऋचं वाचमिति शान्त्यध्यायं पठेत्। हरिः ॐ ऋचं वाचम्प्रपद्ये मनो यजुः प्रपद्ये सामप्राणम्प्रपद्ये चक्षुः श्रोत्रम्प्रपद्ये ॥ वागोजः सहौजो मयि प्राणापानौ ॥ १ ॥ यन्मे छिद्रञ्चक्षुषो हृदयस्य मनसो वातितृण्णम्बृहस्पतिर्मे तद्दधातु ॥ शन्नो भवतु भुवन-

भरे शंख की तुलसी फूल इत्यादि से पूजा करके प्रणव से बारह बार अभि-मंत्रण करके उस शंखोदक से प्रणव का उच्चारण करके शिष्य के माथे पर

माध्यं०

॥५८॥

अभिषेक करके 'ऋचं वाच–' इस शांति अध्याय को पढ़ कर शिष्य के माथे

स्पृषस्प्पतिं÷ ॥ २ ॥ भूर्भुवऽस्व÷तत्सवितुर्व्वरेण्यम्भर्गोदेवस्य
धीमहि ॥ धियोयोनं÷प्प्रचोदयात् ॥ ३ ॥ कयानश्चित्रऽआभुव-
दूतीसदावृधऽसखा ॥ कयाशचिष्ठयाव्वृता ॥ ४ ॥ कस्त्वासत्योम-
दानाम्मःहिष्ठोमत्सदन्धसः ॥ दृढाचिदारुजेव्वसु ॥ ५ ॥ अभी-
षुणऽसखीनामविताजरितॄणाम् ॥ शतम्भवास्यूतिभिं÷ ॥ ६ ॥
कयात्वन्नऽऊत्याभिप्प्रमन्दसेव्वृषन् । कयास्तोतृभ्यऽआभर ॥ ७ ॥
इन्द्रोव्विश्वस्य राजति । शन्नोऽअस्तुद्विपदेशञ्चतुष्प्पदे ॥ ८ ॥
शंनोमित्रः शंव्वरुणः शन्नो भवत्वर्य्यमा ॥ शन्नऽइन्द्रोबृहस्प्पतिः

शन्नो विष्णुरुरुक्रमः ॥९॥ शन्नो वातः पवताᳬ शन्नस्तपतु सूर्यः ॥
शन्नः कनिक्रदद्देवः पर्जन्योऽअभिवर्षतु ॥१०॥ अहानि शम्भवन्तु
नः शᳬरात्रीः प्रतिधीयताम् ॥ शन्नऽइन्द्राग्नी भवतामवोभिः
शन्नऽइन्द्रावरुणा रातहव्या ॥ शन्नऽइन्द्रापूषणा वाजसातौ शमिन्द्रा-
सोमा सुविताय शंय्योः ॥११॥ शन्नो देवीरभिष्टयऽआपो भवन्तु
पीतये ॥ शंय्योरभिस्रवन्तु नः ॥१२॥ स्योना पृथिवि नो भवानृक्ष-
रा निवेशनी ॥ यच्छा नः शर्म सप्रथाः ॥१३॥ आपो हि ष्ठा मयो
भुवस्ता नऽऊर्जे दधातन ॥ महे रणाय चक्षसे ॥१४॥ यो वः शिवतमो
रसस्तस्य भाजयतेह नः ॥ उशतीरिव मातरः ॥१५॥ तस्माऽअरं-

ङ्मामवोयस्यक्षयायाजिन्न्वथ ॥ आपो जनयंथाचन ॥ १६ ॥
द्यौः शान्तिरन्तरिक्षंशान्तिः पृथिवी शान्तिरापः शान्तिरोषध-
यःशान्तिः ॥ वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्मशा-
न्तिःवं शान्तिःशान्तिरेवशान्तिःसामा शान्तिरेधि ॥ १७ ॥
दृते दृहंमामित्त्रास्य मा चक्षुषा सर्व्वाणि भूतानि समीक्षन्ताम् ॥
मित्त्रस्याहञ्चक्षुषासर्वाणिभूतानि समीक्षे ॥ मित्त्रस्य चक्षुषा समी-
क्षामहे ॥ १८ ॥ दृतेदृहंमा ज्योक्त्ते सन्दृशि जीव्यासञ्ज्योक्त्ते
सन्दृशि जीव्यासम् ॥ १९ ॥ नमस्ते हरसे शोचिषे नमस्तेऽ-
अस्त्वर्चिषे ॥ अन्यांस्तेऽअस्मत्तपन्तुहेतयः पावकोऽअस्मभ्यं

शिवो भव ॥२०॥ नमस्ते अस्तुविद्युते नमस्ते स्तनयित्नवे ॥ नमस्ते भगवन्तस्तुयत स्व÷समीहसे ॥२१॥ यतो यतःसमीहसे ततो नोऽअभयङ्कुरु ॥ शन्नः÷कुरुप्रजाभ्योभयन्नःपशुभ्यः÷ ॥२२॥ सुमित्त्रियानऽआपऽओषधयः सन्तु दुर्म्मित्त्रियास्तस्मै सन्तुयो-स्मान्द्वेष्टियञ्चवयन्द्विष्मः ॥ २३ ॥ तच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत् ॥ पश्येम शरदः÷शतञ्जीवेम शरदः÷शतꣳशृणुयाम शरदः÷शतम्प्रब्रवामशरदः÷ शतमदीनाः स्यामशरदः÷शतम्भूयश्च शरदः÷शतात् ॥ २४ ॥ इति शान्त्यध्यायं पठित्वा शिरसि हस्तं

पर हाथ रख.कर पुरुषसूक्त का जप करके शिष्य के दहिने कोंख में से

अपना दहिना हाथ डाल कर शिष्य के हृदय पर रख कर 'ममव्रते० से मह्यम्' तक मंत्र पढ़े। फिर नित्य, सत्य, शुद्ध, परमानंद और अद्वय ब्रह्मको प्रति-पादन करने वाले प्रणव का अधिकारी शिष्य के दहिने कर्ण में उपदेश करे।

निधाय पुरुषसूक्तं जप्त्वा दक्षिणकक्षान्तरेण दक्षिणहस्तं शिष्य-हृदये निधाय मन्त्रं पठेत्। ॐ ममव्रते ते हृदयं दधामि मम चित्तमनुचित्तं तेऽस्तु। ममवाचमेकमनाजुषस्व बृहस्पति-ष्ट्वानि युनक्तु मह्यम्॥ इति हृदयमालभ्य। नित्यसत्यशुद्धबुद्ध परमानन्दाद्वयब्रह्मप्रतिपादकं प्रणवं अधिकारिणः शिष्यस्य दक्षि-णकर्णे उपदिशेत्। तदर्थं पञ्चीकृतमहाभूतेत्याद्याचार्यवचनेना-वबोध्य–प्रज्ञानं ब्रह्म। अयमात्मा ब्रह्म। तत्त्वमसि। अहं ब्रह्मा-

फिर 'प्रज्ञानं० से ब्रह्मास्मि' इन ऋग्वेदादि महावाक्यों में से कोई एक महा-वाक्य का शिष्य शाखा के अनुसार शिष्य को उपदेश करके उसका अर्थ सम-

ज्ञा दे। फिर तीर्थ आश्रम आदि संप्रदायके अनुसार शिष्य का नाम रखे।

स्मि। इति ऋग्वेदादिमहावाक्येष्वन्यतमं शिष्यशाखानुसारेणोपदिश्य तदर्थं चावबोधयेत्। ततस्तीर्थाश्रमादि संप्रदायानुसारेण नाम कुर्यात्। अनन्तरं गुरुः शिष्याय परमहंसधर्मानुपदिश्य शिष्यं परीक्ष्य तस्याधीतविद्यस्य पर्यङ्कशौचं[1] कारयित्वा योगपट्टं दद्यात्।

इति माध्यन्दिनीयसंन्यासपद्धतिः समाप्ता।

फिर गुरु शिष्य को परमहंस धर्मों का उपदेश करके शिष्य की परीक्षा करके विद्या पढ़े हुए शिष्य को पर्यंकशौच कराके तब योगपट्ट दे।

इति भाषाटीकासहिता माध्यन्दनीयसंन्यासपद्धतिः समाप्ता।

---

१—पर्यंकशौच और योगपट्ट अन्यत्र देखिये।

अब आतुर संन्यास कहते हैं। पहिले की तरह प्रायश्चित्त करके देश काल का उच्चारण करके 'अशेष० से करिष्ये' तक पढ़ कर संकल्प करे। फिर पांच

अथ आतुरसंन्यासप्रयोगः ॥ तत्र पूर्ववत्कृच्छ्रसंकल्पं कृत्वा देशकालौ संकीर्त्य अशेषदुःखनिवृत्तिनिरतिशयानंदब्रह्मलोकावाप्तये आतुरसंन्यासं करिष्ये। इति संकल्प्य पंच सप्त वा केशान्विसृज्य केशश्मश्रुनखलोमानि वापयित्वा स्नात्वा संध्यामुपास्य ब्रह्मयज्ञं विधाय देवादींस्तर्पयित्वा अपांसमीपं गत्वा पात्राभ्यां जलमुद्धृत्य तत्रैकपात्रस्थजलेन दक्षिणपाणिना अप्सु जुहुयात्। एष वा अग्नेर्योनिर्यः प्राणः प्राणं गच्छ स्वां योनिं गच्छ स्वाहा।

अथवा सात केशों को काट कर शिखा छोड़ बाकी सब शरीर के केश व नखों को कटवाकर स्नान, संध्या, ब्रह्मयज्ञ, देवतर्पण करके जलके समीप जाकर दो पात्रों में जल लेकर एक पात्र का जल 'एषवा० से स्वाहा' तक पढ़ कर

दाहिने हाथ से जलही में छोड़े। वैसे ही 'आपो वै० से स्वाहा' तक पढ़कर दूसरे पात्र का जल जल में छोड़े। इस प्रकार जल की दो आहुति देने के बाद

इति प्रथमाहुतिः। तथैव आपो वै सर्वा देवताः सर्वाभ्यो जुहोमि स्वाहा। इति द्वितीयाहुतिः। तत उभयपात्रस्थं हुतशेषजलं 'आशुः शिशान' इति सप्तदशर्चेनाभिमंत्र्य पुत्रैषणा वित्तैषणा लोकैषणा मया त्यक्ता इति प्रथमपात्रस्थमुदकं पिबेत्। ततो द्वितीयपात्रस्थमुदकं अभयं सर्वभूतेभ्यो मत्तः स्वाहा इति पीत्वा पात्रद्वयस्थं शेषभूतमुदकं हस्तेनादाय ॐ भूर्भुवः स्वः संन्यस्तं मया स्वाहा इति पिबेत्। ततः सावित्रीप्रवेशः॥ ॐ

पहिले पात्र के बचे जल को 'आशुः शिशान' इन सत्रह ऋचाओं से अभिमंत्रित करके 'त्यक्ता' तक पढ़ कर पिये। फिर दूसरे पात्र का जल 'अभयं० से स्वाहा' तक पढ़कर पिये। बाद दोनों पात्र का बचा जल 'ॐ भूः० से स्वाहा'

तक पढ़ कर पिये फिर 'ॐ भूर्भुवः० से प्रचोदयात्' तक पढ़ते हुए सावित्री प्रवेश करे। फिर व्याहृती को प्रणव में प्रवेश कराके प्रणवमय अपने को समझकर

भूः सावित्रीं प्रवेशयामि ॐ तत्सवितुर्वरेण्यं। ॐ भुवः सावित्रीं प्रवे० ॐ भर्गो देवस्य धीमहि। ॐ स्वः सावित्रीं प्रवे० ॐ धियो यो नः प्रचोदयात्। ॐ भूर्भुवः स्वः सावित्रीं प्रवे० ॐ तत्स० प्रचोदयात्। ॐ भूः प्रणवे प्रवे०। ॐ भुवः प्रणवे प्रवे०। ॐ स्वः प्रणवे प्रवे०। ॐ भूर्भुवः स्वः प्रणवे प्रवे०। इति व्याहृतीः प्रणवे प्रवेश्य प्रणवमयमात्मानं ध्यात्वा ततः सूर्याभिमुखस्तिष्ठन्नूर्ध्वबाहुः—ॐ भूः संन्यस्तं मया। ॐ भुवः संन्यस्तं मया। ॐ स्वः संन्यस्तं मया। ॐ भूर्भुवः स्वः संन्यस्तं मया। इत्युपांशुमध्यमो-

सूर्य के तरफ मुँह करके हाथ ऊँचा करके 'ॐ भू० से मया' तक अल्प, मध्य तथा उच्च स्वर से तीन-तीन बार अथवा एक-एक बार कहे। फिर केशों को सफाकर जनेऊ

निकाल कर जल पूर्ण अंगुलि से 'भू० स्वाहा' इस मंत्र से जल में अथवा पृथ्वी पर छोड़े। फिर उत्तर मुँह तथा नग्न होकर धनुषाकार पृथ्वी में चले। बाद

स्वरैः त्रिस्त्रिः सकृत्सकृद्वा ब्रूयात्। ततः केशानुत्पाट्य यज्ञोपवीतमुद्धृत्य जलपूर्णेनांजलिना भूः स्वाहा इत्यप्सु भूमौ वा प्रक्षिपेत्। ततः उदङ्मुखःसन् दिगम्बरो भूत्वा मह्यां धनुः प्रमाणं गच्छेत्। तत आचार्यो दण्डवत्प्रणिपत्य अतिप्रियवचनैर्लोकव्यवहारार्थं लज्जानिवारणार्थं कौपीनाच्छादनवासोयुक्तं करोति। गोसर्पनिवारणाय दण्डयुक्तं च। ततः संन्यासी कौपीनादि काषायरंजितं परिधाय आचम्य दंडं प्रार्थयेत्। वार्त्रघ्नशर्म मेभव

आचार्य नमस्कार कर लज्जा निवारण करने के लिये वस्त्र दे तथा दण्ड भी दे। फिर संन्यासी रंगा कपड़ा पहन कर आचमन कर 'वार्त्रघ्न० से भवाग्र मे' तक

पढ़कर दण्ड की प्रार्थना करके 'सखे मां गोपाय' इस मंत्र से दहिने हाथ में दण्ड ग्रहण करे। पुत्र के घर न जाय, संन्यासाश्रम का पालन करे। स्वस्थ

यत्पापं तन्निवारय। विष्णुहस्ते यथाचक्रं शूलं शिवकरे यथा। इन्द्रहस्ते यथा वज्रं तथा दण्डं भवाद्य मे। इति दण्डं प्रार्थ्य- सखे मां गोपाय। इति मंत्रेण दक्षिणहस्ते गृह्णीयात्। पुत्रगृहं न गच्छेत्। संन्यासाश्रमे तिष्ठेत्। स्वस्थः सन् गुरुमुपगम्य महा- वाक्योपदेशं लब्ध्वा संन्यासविध्युक्ताचरणेन वर्त्तेत।

इति आतुरसंन्यासप्रयोगः समाप्तः ॥

होने पर गुरु समीप जाकर महावाक्य का उपदेश लेकर संन्यास विधि में कहे हुए आचरण से रहे।

इत्यातुरसंन्यासस्य भाषाटीका समाप्ता।

हंस। हंसाय विद्महे परमहंसाय धीमहि ।

तन्नो हंसः प्रचोदयात् ।

दशनाम सन्यास

तीर्थाश्रम वनारण्य गिरि पर्वत सागरा।

पुरी भारती सरस्वती ~~[illegible]~~ दस्येते दशनामिन।

...शावायनमः

...प्राय वामनमः

...नारायणायनमः

# इति माध्यनन्दिनीयसंन्यासपद्धतिः

भाषा टीका सहिता ।

पुस्तक प्राप्तिस्थान :—

**वाणी विलास प्रकाशन**

कचौड़ीगली, वाराणसी ।



सत्यम
साधना
कुटीर
स्वामी श्री
शान्ति
धर्मानन्द
विद्यार्थी
वृन्दम